श्रीगुरुरुवाच । सम्यक् पृष्टं त्वया विद्वन् ! सावधानेन तत् शृणु । प्रामाणिकी न भवति भ्रान्त्या मोहितकल्पना । भ्रान्तिं विना त्वसङ्गस्य निष्क्रियस्य निराकृतेः । न घटेतार्थसम्बन्धो नभसो नीलतादिवत् । स्वस्य द्रष्टुर्निर्गुणस्याक्रियस्य प्रत्यगबोधानन्दरूपस्य बुद्धेः । भ्रान्त्या प्राप्तो जीवभावो न सत्यो मोहापाये नास्त्यवस्तुस्वभावः । यावद्भ्रान्तिस्तावदेवास्य सत्ता मिथ्याज्ञानोज्जृम्भितस्य प्रमादात् । रज्ज्वां सर्पो भ्रान्तिकालीन एव भ्रान्तेर्नाशे नैव सर्पोऽपि तद्वत् । अनादित्वमविद्यायाः कार्य्यस्यापि तथेष्यते । उत्पन्नायान्तु विद्यायामाविद्यकमनाद्यपि । प्रबोधे स्वप्नवत् सर्व्वं सहमूलं विनश्यति । अनाद्यपीदं नो नित्यं प्रागभाव इव स्फुटम् । अनादेरपि विध्वंसः प्रागभावस्य वीक्षितः । यद्बुद्ध्युपाधिसम्बन्धात् परिकल्पितमात्मनि । जीवत्वं न ततोऽन्यस्तत्स्वरूपेण विलक्षणः । सम्बन्धः स्वात्मनो बुद्ध्या मिथ्याज्ञानपुरःसरः । विनिवृत्तिर्भवेत्तस्य सम्यग्ज्ञानेन नान्यथा । ब्रह्मात्मैकत्वविज्ञानं सम्यक् ज्ञानं श्रुतेर्मतम् । तदात्मानात्मनोः सम्यग्विवेकेनैव सिध्यति । ततोविवेकः कर्त्तव्यः प्रत्यगात्मसदात्मनोः । जलं पङ्कवदत्यन्तं पङ्कापाये जलं स्फुटम् । यथा भाति, तथात्मापि दोषाभावे स्फुटप्रभः । असन्निवृत्तौ तु सदात्मना स्फुटं प्रतीतिरेतस्य भवेत् प्रतीचः । ततो निरासः करणीय एव सदात्मनः साध्वहमादिवस्तुनः । अतोनायं परात्मा स्याद्विज्ञानमयशब्दभाक् । विकारित्वाज्जड़त्वाच्च परिच्छिन्नत्वहेतुतः। दृश्यत्वात् व्यभिचारित्वात् नानित्योनित्य इष्यते"। आनन्दमयकोषस्तु आनन्दमयकोषशब्दे ७२६पृ० उक्तः धननिचयात्मककोषस्य राज्याङ्गतामाह "स्वाम्यमात्यौ पुरं राष्ट्रं कोषदण्डौ सुहृत्तथा । सप्त प्रकृतयोह्येताः सप्ताङ्गं राज्यमुच्यते । सप्तानां प्रकृतीनां तु राज्यस्यासां यथाक्रमम् । पूर्व्वं पूर्व्वं गुरुतरं जानीयाद्व्यसनं महत्" मनुः "स्वामी राजा अमात्योमन्त्र्यादिः । पुरं राज्ञः कृतदुर्गनिवासनगरं, राष्ट्रं देशः, कोषोवित्तनिचयः, दण्डो हस्त्यश्वरथपादातं, मित्रं त्रिविधं सप्तमाध्यायोक्तमित्येते सप्त प्रकृतयोऽङ्गानि सप्ताङ्गमिदं राज्यमित्युच्यते । ततः किमतआह सप्तानामिति । आसां राज्यस्य प्रकृतीनां सप्तानां क्रमिकोक्तानामुत्तरस्याविनाशमपेक्ष्य पूर्व्वस्याविनाशरूपं व्यसनं गरीयोजानीयात् । तथाहि मित्रव्यसनात् स्वबलव्यसनं गरीयः सम्पन्नबलस्यैव मित्रानुग्रहे सामर्थ्यात् । एवं बलात् कोषोगरीयान् कोषनाशे बलस्यापि नाशात् । कोषाद्राष्ट्रं गरीयः राष्ट्रनाशे कुतः कोषोत्पत्तिः । एवं राष्ट्राद्दुर्गं गरीयो दुर्गादेव यवसेन्धनादिसम्पन्नाद्राज्यरक्षासिद्धेः । दुर्गादमात्यो गरीयान् प्रधानामात्यनाशे सर्वाङ्गवैकल्यात् । अमात्यादपि आत्मा सर्व्वस्यात्मार्थत्वात्" कुल्लू०

कोषसङ्ग्रहस्यावश्यकता युक्तिकल्पतरौ वर्णिता यथा "कोषो महीपतेर्जीवो न तु प्राणाःकथञ्चन । द्रव्यं हि देहो भूपस्य न शरीरमिति स्थितिः । धर्म्महेतोः सुखार्थाय भृत्यानां भरणाय च । आपदर्थञ्च संरक्ष्यः कोषः कोषवता सदा । धनात् कुलं प्रभवति धनाद्धर्म्मः प्रवर्त्तते । नाधनस्य भवेद्धर्म्मः कामश्चैव कथञ्चन । अधर्म्मान्निधनं कुर्य्यात्तद्धनं गृह्यते परैः । स्वयं पापस्य पात्रं स्यात् सिंहो हस्तिवधादिव । तादात्विको मूलहरः कदर्य्यस्त्रिविधो ऽर्जकः । उत्पन्नार्थव्ययकरो यो भविष्यद्गनाशया । स तादात्विक आख्यातः कल्याणी तस्य नायतिः । यः पित्राद्यर्ज्जितं वित्तमन्यायेन तु भक्षयेत् । स मूलहर आख्यातस्तदुदर्कोऽपि चाशुभः । स कदर्य्यस्तु भृत्यात्मपीड़नैरर्थसञ्चयी । तद्धनं राजदायादतस्कराणां निधिर्भवेत् । रिक्ता च राजकोषस्य स्तोकस्तोकेन वर्द्धते । अञ्जनञ्च धनञ्चैव स्तोकस्तोकेन हीयते । कोषस्य साधनोपायो मुख्यं राष्ट्रमिति स्मृतम् । गुणैर्वर्द्धते राष्ट्रं तद्वृद्धिर्नृपवृत्तता । राज्ञोपायेन संरक्ष्या ग्रामे ग्रामे कृषीवलाः । तेभ्यः करस्ततश्चार्थो अर्थेभ्यः सर्वसम्पदः । शरीरकर्षणात् प्राणाः क्षीयन्ते प्राणिनां यथा । तथा वर्षेषु वर्षेषु कर्षणात् भूगुणक्षयः । एकस्यां गुणहीनायां कृषिमन्यत्र कारयेत्" ।

तत्सञ्चयोपायाश्च भा० शा० ८८अ० दर्शिताः यथा "यदा राजासमर्थोऽपि कोषार्थे स्यान्महामते! ।" इत्यादि युधिष्ठिरप्रश्ने भीष्मोक्तिः "यथादेशं यथाकालं यथाबुद्धि यथाबलम् । अनुशिष्यात् प्रजा राजा धर्म्मार्थी तद्धिते रतः। यथा तासाञ्च मन्येत श्रेय आत्मन एव च । तथा कर्म्माणि सर्व्वाणि राजा राष्ट्रेषु वर्त्तयेत्" इत्युपक्रमे "मधुदोहमित्याद्युक्तं" तच्च करशब्दे १६८७पृ० दर्शितम् । तत्र ६०अ० इत्युक्तिः प्रामादिकी ८८अ० इत्येव साधु । ततः परं कियदन्तरे "प्रयोगं कारयेयुस्तान् यथा बलिकरांस्तथा । कृषिगोरक्षवाणिज्यं यच्चान्यत् किञ्चिदीदृशम् । पुरुषैः, कारयेत्

कर्म्म बहुभिः कर्म्मभेदतः। नरश्चेत् कृषिगोरक्षावाणिज्यञ्चाप्यनुष्ठितौ। संशयं लभते किञ्चित्तेन राजा विगर्हते। धनिनः पूजयेन्नित्यं पानाच्छादनभोजनैः। वक्तव्याश्चानुगृह्णीध्वं प्रजाः सह मयेति वै। अङ्गमेतन्महद्राजन् धनिनो नाम भारत!। ककुदं सर्व्वभूतानां धनस्थो नात्र संशयः। प्राज्ञः शूरो धनस्थश्च स्वामी धार्म्मिक एव च। तपस्वी सत्यवादी च बुद्धिमांश्चापि रक्षति। तस्मात् सर्व्वेषु भूतेषु प्रीतिमान् भव पार्थिव!। सत्यमार्ज्जवमक्रोधमानृशंस्यञ्च पालय। एवं दण्डञ्च कोषञ्च मित्रं भूमिञ्च लप्स्यसे। सत्यार्ज्जवपरो राजन्मित्रकोषसमन्वितः"। १६तदाधारे गृहे जटा० (खाजानार) "तस्मात् द्विजेभ्यो दत्त्वार्थं सर्व्वं कोषे निवेशयेत्" मनुः। १७मेघे निघ०।

**कोश(ष)कार** पु० कोशं(षं) करोति कृ–ण्वुल् उप०स०। १खड्गाद्यावरणकारके स्त्रियां टाप् सि०कौ० तस्य पत्नी ङीष्। सुग्धबोधमते ईप्। "नैर्ऋत्यै कोषकारीम्" यजु० ३०।१४। "खड्गावरणकोश(ष)कारिणीम् स्त्रियम्" वेददी०। २इक्षुभेदे शब्दरत्ना०। कोषं स्ववेष्टनं तन्तुभिः करोति कृ–अण्। ३कीटभेदे (गुटिपोका)। "संवेष्टमानं बहुभिः मोहात्तन्तुभिरात्मजैः। कोषकारमिवात्मानं वेष्टयन्नावबुध्यते" भा०शा० ३३१अ०।

**कोश(ष)कृत्** त्रि० कोषं खड्गाद्यावरणं वेष्टनं वा करोति कृ–क्विप् ६त०। १कोषकारार्थे। २इक्षुभेदे सुश्रुतः "नेपालो दीर्घपत्रश्च नीलपोरोऽथ कोषकृत्" सुश्रु० इक्षुभेदोक्तौ

**कोश(ष)चञ्चु** पु० कोशः चञ्चौ यस्य। सारसपक्षिणि शब्दच०

**कोश(ष)पाल** पु० कोषं राज्याङ्गधनसंचयं पालयति पालि–अण् उप०स०। कोषरक्षके तल्लक्षणमुक्तं हेमा० परि०ख० लक्षणसमुच्चये। "धातुवस्त्राजिनादीनां रत्नानां प्रविभागवित्। विज्ञाता फल्गुसाराणामसंहार्य्यः शुचिः सदा। निपुणश्चाप्रमत्तश्च धनाध्यक्षः प्रकीर्त्तितः। आयद्वारेषु सर्व्वेषु धनाध्यक्षसमा नराः। व्ययद्वारेषु च तथा कर्त्तव्याः पृथिवीक्षिता। आयव्ययज्ञो लोकज्ञो देशोत्पत्तिविशारदः। कृताकृतज्ञो भृत्यानां ज्ञेयः स्यादर्थरक्षकः"। "निर्यान्तु कोश(ष)पालाश्च कुरुक्षेत्राश्रमं प्रति" भा० आश्र० २२अ०। ण्वुल् कोश(ष)पालकोऽप्यत्र।

**कोश(ष)फल** न० कोशे(षे) फलमस्य। कक्कोले अमरः २महाकोषातक्याम् स्त्री अजा० टाप्। ३लपुष्यां च स्त्री राजनि० गौरा० ङीष्।

**कोशयी** पु० कुश–बा० अयी। स्वर्णादिपूर्णे। "कोशयीर्देश वाजिनोऽदात्" ऋ० ६।४७।२२। छान्दसः प्रयोगः

**कोश(स)ला** स्त्री कुश(स) वृषा० कल नि० गुणः। १सरयूतटस्थायामयोध्यायां पुर्य्यां २तद्युक्ते देशे पु०ब०व०। "कान्तलाः काशिकोश(स)लाः" भा० भी० ९अ० जनपदकथने। पूर्व्वदिक्स्थदेशभेदेषु प्राच्यकोशलेषु पु०ब०व० ते च कोशलकाश्च मानवः" वृ०द० कर्म्मविभागे पूर्व्वस्यामुक्ताः। क्वचिदेकत्वमपि। "कोश(स)लोनाम मुदितः स्फीतोजनपदो महान्। निविष्टः सरयूतीरे प्रभूतधनधान्यवान्" रामा० १।५।५। कोशलदेशोद्विविधः प्राच्योत्तरभेदात् तत्र अयोध्यायुक्तदेशस्योत्तरकोशलत्वम् "पितुरनन्तरमुत्तरकोशलान्" "तस्मै विसृज्योत्तरकोश(स)लानाम्" "प्रियासखीरुत्तरकोशलेश्वरः" रघुः प्राच्यकोशलास्तु कोसलशब्दे वक्ष्यते। तद्देशस्य राजा अण्। कौश(स)ल्य कोशलदेशनृपे। "कौ(शौ)सल्यइत्युत्तरको(शो)सलानाम्" रघुः स्त्रियां टाप् कौसल्या। "कौसल्यानन्दवर्द्धनो रामः" रामा०।

**कोश(स)लात्मजा** स्त्री कोश(स)लाः पूर्व्वकोश(स)लदेशः लक्षणया तदधिपः तस्यात्मजा। प्राच्यकोसलाधिपस्यापत्ये हुतायाम् रामभ्रातरि शब्दर०

**कोशलिक** न० कुशलाय कार्य्ये यो दीयते ठक् पृषो० औरत्वम्। निजकार्य्यसाधनार्थं राजादिकार्य्यकरेभ्यो दीयमाने उत्कोचे (घुस) हेम० कौशलिकमिति पाठान्तरं साधु

**कोश(ष)वत्** त्रि० कोषः(शः) अस्त्यस्य मतुप् मस्य वः। १कोश(ष)युक्ते। "धर्म्मात्मा कोषवांश्चापि देवराज इवापरः" भा० आनु० २अ०। स्त्रियां ङीप् कोश(ष)वती सा च २कोषातकीवृक्षे "दन्तीयुतं वा मगधोद्भवानां कल्कं पिबेत् कोषवतीरसेन" "शुकाख्याकोषवत्योश्च मूलं मदन एव च" "जीमूतकैः कोशवतीफलैश्च दन्तीद्रवन्तीत्रिवृताभिश्चैव" इति च सुश्रु०

**कोश(ष)वासिन्** पु० कोशे(षे) वसति वस–णिनि ७त०। कोषाभ्यन्तरस्थे जन्तुभेदे "कोशवासिनां पादिनां च तद्देव" (अनुपानम्) सुश्रु० कोशस्थशब्दे विवृतिः

**कोश(ष)वृद्धि** पु० कोषस्य मुष्कस्य वृद्धिर्यत्र। १कुरण्डक वृद्धे। ६त०। २अण्डकोषवृद्धौ रोगभेदे ३धनसञ्चयवृद्धौ च स्त्री

**कोश(ष)शायिका** स्त्री कोषे(शे) पिधानमध्ये शेते शी ण्वुल् ७त० अतइत्त्वम्। क्षुरिकायां जटाधरः

**कोश(ष)स्कृत्** पु० कोशं(षं) करोति कृ–क्विप् नि० सुट्। कोषकारके जन्तुभेदे (गुटिपोका) "त्यजेत् कोश(ष)स्कृदिवेह

मान:" भाग० ७।४।११ "कोश(ष)कृत् कोषकारः" श्रीधरः

**कोश(ष)स्थ** पु० कोशे(षे) तिष्ठति स्था—क ७त० । सुश्रुतोक्ते शङ्खादिके जन्तुभेदे । "आनूपवर्गस्तु पञ्चविधः" इत्युपक्रम्य कोशस्था इत्युद्दिश्य "शङ्खः शङ्खनखः शुक्तिशम्बूकभल्लूकप्रभृतयः कोशस्थाः पादिनश्च" इत्युक्त्वा कूर्मादीनुक्त्वा तन्मांसगुणा उक्ता यथा "शङ्खकूर्मादयः स्वादुरसपाकाः मरुन्नुदः । शीताः स्निग्धा हिताः पित्ते वर्चस्याः श्लेष्मवर्द्धनाः"

**कोशा(षा)गार** न० ६त० । धनागारे (खाजनाघर) "कोषागारमायुधागारमश्वशालां हस्तिशालाञ्च कुद्धः" भा० व० १६७ कोश(ष)गृहादयोऽप्यत्र न० [कड़] क्षुपभेदे हारा०

**कोशा(षा)ङ्ग** न० कोशः(षः) इवाङ्गमस्य । वङ्कमूले इत्कटौ (ओ-

**कोशा(षा)तक** पु० कोश(ष)मतति अत—क्वुन् । १कठे वेदशाखाभेदे २पटोलास् घोषके (तरुइ) (कोङा) ख्याते शाकभेदे स्त्री मेदि० गौरा० ङीष् । भाव० इयं राजसेव्यत्वात् महत्त्वाद्वा राजोपपदा निर्द्दिष्टा "धामार्गवः पीतपुष्पा जालिनी कृतवेधना । राजकोशातकी चेति तथोक्ता राजिमत्फला । राजकोशातकी शीता मधुरा कफवातला । पित्तघ्नी दीपनी श्वासज्वरकासकृमिप्रणुत्" "कोशातकीवल्लिभवा अप्यपल्लवा स्तक्रेण युक्ताः सुघृतेन संस्कृताः । सम्भर्जिताः सैन्धवहिङ्गुसाधिते तैलेऽतिरुच्या बहुपुष्टिदायकाः" तस्याः फलम् अण् हरीतक्या० लुप् । तत्फले स्त्री "कोशातकीपुष्पगुलुच्छकान्तिभिः" माघः

**कोशा(षा)म्र** पु० को(शे)षे आम्र इव । १फलप्रधानवृक्षभेदे (कोशाम) "कोशाम्रः कुष्ठशोथास्रपित्तव्रणकफापहः । तत्फलं ग्राहि वातघ्नमम्लोष्णं गुरु पित्तलम् । पक्वं तु दीपनं रुच्यं लघूष्णं कफवातहृत्" भावप्र० । (केओड) २फलवृक्षे राजवल्लभः

**कोशि(षि)न्** त्रि० कोश(ष)+अस्त्यर्थे इनि । १कोश(ष)युक्ते आमोपपदकोषी तु सुश्रुतोक्ते कर्णबन्धनजे रोगभेदे "वर्द्धमानस्तु यः कर्णं सहसैवाभिवर्द्धयेत् । आमकोशी समाख्यातः क्षिप्रमेव विमुच्यते" । २आम्रवृक्षे पु० शब्दमाला ।

**कोशि(षि)ला** स्त्री कोश+अस्त्यर्थे पिच्छादित्वात् इलच् । मुद्गपर्ण्याम् राजनि०

**कोशी(षी)** स्त्री कुश-(कुष) अच् गौरा० ङीष् । १चर्म्मपादुकायाम् २धान्याद्यग्रभागे च (शुङ्गा) हेम०

**कोश्य(ष्य)** त्रि० कोशे हृदयकोशे(षे) भवः यत् । हृदयकोश मांसपिण्डे "प्लिहानि कोश्याभ्याम्" यजु० २५।८ "कोश्याभ्यां हृदयस्य मांसपिण्डाभ्याम्" वेददी०

**कोष** पु० न० । कुष—पचादि० अच् । १कोशशब्दार्थे कोशशब्दे विवृतिः । २ऋषिभेदे । "अयोह कोषा धावन्तः शत० ब्रा० १०।५।५।८ "कोषानाम ऋषयः" भा० ।

**कोषक** पु० कोष—स्वार्थे क । अण्डकोषे शब्दर०

**कोषला** स्त्री० कोष—कलच् । अयोध्यायां पुर्यां शब्दरत्ना०

**कोष्ठ** पु० कुष—थन् । १गृहमध्ये, २उदरमध्ये, ३धान्यादिस्थापने ४कुसूले च (कुठी) ५आत्मीये त्रि० मेदि० "स्थानान्यामाग्निपक्कानां मूत्रस्य रुधिरस्य च । हृदुण्डुकः पुप्फुसश्च कोष्ठ इत्यभिधीयते" ६सुश्रुतोक्ते आमाग्निपक्कमूत्ररुधिरस्थाने "प्रवाहिका शिरः शूलं कोष्ठशूलञ्च दारुणम्" "चले दोषे मृदौ कोष्ठे नेच्छेतात्र बलं न्यगास्" सुश्रु० "भुक्तं भुक्तमिदं कोष्ठे कथमन्नं विपच्यते" भा० आश्व० ५७ श्लो० "पतिं भार्य्योपतिष्ठेत ध्यायेत् कोष्ठगतं यथा" भा० शां० ६।१८।५२ । ध्रुवचक्रादिचक्रचतुःपार्श्वस्थरेखाचतुष्कान्विते ७स्थानभेदे अकथहशब्दे ३८५पृ० उदा० । ८पदे स्थानमात्रे "पञ्चारामं नवद्वारमेकपालं त्रिकोष्ठकम् । यत् पञ्चविपणम् चेत्र पञ्चप्रकृतिस्त्रीवरम् । पञ्चेन्द्रियार्था आरामा द्वारः प्राणा नव प्रभो! । तेजोऽबन्नानि कोष्ठानि कुलमिन्द्रियसंग्रहः । विपणस्तु क्रियाशक्तिर्भूतप्रकृतिरव्यया" भाग० ४।२८।५१।५२।५२ । कुसूले "जरत्कोष्ठाद्दीहीन्छकराभिमिश्रानाहरति" कौषीतकिब्रा०

**कोष्ठागार** न० कोष्ठमगारमिव । धान्यधनादेः स्थापने गृहे (कुठी) "कोष्ठागारायुधागारदेवतागारभेदकान्" मनुः "कोष्ठागारं तु ते नित्यं स्फीतं धान्यैः सुसंवृतम् । सदास्तु सत्सु संन्यस्तं धनधान्यपरोभव" भा० आ० ११९अ०

**कोष्ठागारिक** त्रि० कोष्ठागारे भवः तत्र नियुक्तो वा वा० ठन् । १कोष्ठागारभवे । "अत्यर्थं स्रवति रक्तं कोष्ठागारिकाङ्गारमृत्पिण्डेत्यादि" सुश्रु० २कोष्ठागारे नियुक्ते च ।

**कोष्ठागारिन्** पु० कोष्ठरूपमगारमिवास्त्यस्य इनि । कीटभेदे "कोष्ठागारी कृमिकरश्च मण्डलपुच्छकः" सुश्रुते प्राणनाशककीटोक्तौ

**कोष्ण** न० ईषदुष्णम् कोः कादेशः । १ईषदुष्णस्पर्शे २तद्वति त्रि० अमरः । "भुवं कोष्णेन पीनोष्ठी नेष्येनाश्मयादपि" रघुः "इतेन सा शान्तिमुपैति जिह्वा कोष्णेन यष्टीमधुकान्वितेन" "शोथं सतोदं कोष्णेन सर्पिषा परिषेचयेत्" सुश्रु०

**कोसल** पु॰ व॰व॰। कुस–अलच्। देशभेदे। तेऽभिजनोऽस्य तेषां राजा वा ष्यञ्। कौसल्य पित्रादिक्रमेण तद्देशवासिनि बहुषु तस्य लुक् कोसलाः। कोशलशब्दे विवृतिः। कोसलदेशस्य द्विविधः पूर्व्वोत्तरभेदात् "कोसलाधिपतिं चैव तथा वेण्वातटाधिपम्। कान्तारकांश्च समरे तथा प्राक्कोसलान्नृपान्" भा॰ स॰ ३०अ॰ "दक्षिणाये च पाञ्चालाः पूर्व्वाः कुन्तिषु कोसलाः" १२अ॰ उत्तरकोसलास्तु कोशलशब्दे दर्शिताः

**कोहल** पु॰ कौ हलति स्पर्द्धते अच् पृषो॰। १वाद्यभेदे मेदि॰ २मद्यभेदे च हेम॰ ३नाट्यशास्त्रकर्त्तृमुनिभेदे तस्यापत्यम् शिवा॰ अण्। कौहल तदपत्ये पुंस्त्री॰ डलयोरैक्यात् कोहड़ोऽप्यत्र

**कोहनीय** पु॰ ऋषिभेदे "उपयातायार्घ्यमिति कोहनीयाः" गोभि॰ गृ॰सू॰। उपयातायाचार्य्यं समीपं गतायार्घ्यं देयमिति कोहनीया आचार्य्या आहुः" सं॰त॰रघुनन्दनः

**कोहित** पु॰। ऋषिभेदे। ततोऽपत्ये शिवा॰ अण्। कौहित तदपत्ये पुंस्त्री॰

**कौकिली** स्त्री कोकिलेन दृष्टा अण्। कोकिलर्षिदृष्टायां सौत्रामण्याम्। "द्वे सौत्रामण्यौ कौकिली चरकसौत्रामणी च" लाट्या॰ श्रौ॰सू॰।

**कौकुट्टक** पु॰ व॰व॰। देशभेदे स च दक्षिणस्थः। "अथापरे जनपदा दक्षिणा भरतर्षभ!" इत्युपक्रमे "कौकुट्टकास्तथा कोलाः कौङ्कणाः मालवानराः" भा॰ भी॰ ६अ॰।

**कौकुन्तक** पु॰ ब॰ व॰। जनपदभेदे।

**कौकुर** पु॰ ब॰ व॰। कुकुराणां देशः अण्। १देशभेदे। "अम्बष्ठाः कौकुरास्ताक्ष्यो वस्त्रपाः पह्लवैः सह" भा॰ सभा॰ ५१अ॰। कुकुराः यादवभेदाएव स्वार्थे अण्। कुकुरवंश्ये २नृपभेदे। "श्रुत्वा विनष्टान् वार्ष्णेयान् सभोजान्धककौकुरान्" भा॰ मौ॰ ५अ॰।

**कौकृत्य** न॰ कुत्सितं कृत्यं स्वार्थे अण्। १अयुक्तकरणे २अनुतापविषये च मेदि॰।

**कौक्कुटिक** पु॰ कुक्कुटीं मायां, पादपतनदेशञ्च पश्यति ठक्। १दाम्भिके.कीटादिवधभीत्या पादक्षेपस्थानमात्रदृष्टरि संन्यासिनि च मेदि॰। सन्यासी हि हिंसाभयात् पादन्यासप्रदेशपर्य्यन्तमेव पश्यन् दूरात् चक्षुः संयम्य यातीति तथात्वम्।

**कौक्कुटिकान्दल** पुंस्त्री कुक्कुटस्यायम् इञ् कौक्कुटिः स इव कन्दलः। (चेड़ासाप) सर्पभेदे त्रिका॰ स्त्रियां ङीप्।

**कौक्ष** त्रि॰ कुक्षौ बद्धः असिभिन्नः। कुक्षिबद्धे अलङ्कारादौ

**कौक्षक** त्रि॰ कुक्षौ देशभेदे भवः धूमा॰ वुञ्। कुक्षिदेशभवे

**कौक्षेय** त्रि॰ कुक्षौ भवः"दृतिकुक्षीत्यादिना" पा॰ढञ्। कुक्षौ भवे। "असिं कौक्षेयमुद्यम्य चकारापनसं मुखम्" भट्टिः

**कौक्षेयक** पु॰ कुक्षौ बद्धः असिः ढकञ्। कुक्षिबद्धे खड्गे "कौक्षेयकेण सन्निहितविषधरेणेव चन्दनलता" काद॰। "बहुतीक्ष्णकौक्षेयक" दशकुमा॰।

**कौङ्क** पु॰ कोङ्कएव स्वार्थे अण्। कोङ्कणदेशे शब्दरत्ना॰

**कौङ्कण** पु॰ व॰ व॰। कोङ्कण+स्वार्थे अण्। १कोङ्कणदेशे "कौङ्कणाः मालवानराः" भा॰भी॰ ६अ॰। तस्य राजा अण् २तद्देशनृपे च।

**कौङ्किण** न॰ व॰व॰। कोङ्कण+पृषो॰। कोङ्कणदेशे शब्दर॰।

**कौञ्च** पु॰ क्रुञ्चएव स्वार्थे अण् पृषो॰। क्रौञ्चपर्व्वते त्रिका॰।

**कौञ्जायन्य** पु॰ कुञ्जा॰ गोत्रापत्ये च्फञ् ततः स्वार्थे ञ्य। १कुञ्जर्षिगोत्रापत्ये स्त्रियान्तु न ञ्य किन्तु गोत्रप्रत्ययान्तत्वात् ङीप् कौञ्जायिनी सा च २ब्राह्मण्याम् जटाधरः।

**कौञ्जि** पुंस्त्री॰ कुञ्जस्यर्षेरनन्तरापत्यम् अतइञ्। कुञ्जर्षेरनन्तरापत्ये स्त्रियां वा ङीप्।

**कौट** त्रि॰ कूटे अद्रिशृङ्गे भवः उत्सा॰ अञ्। १कुटजवृक्षे (कुरची) भावप्र॰ कुटज्यां प्रायभवः अण्। २स्वतन्त्रे त्रि॰। कूटस्य भावः अण्। ३मिथ्याकथने ४मिथ्यासाक्ष्ये च

**कौटकिक** त्रि॰ कूटमेव कूटकं मांसकूटं तत्पण्यमस्य ठञ्। मांसविक्रेतरि शब्दरत्ना॰

**कौटज** पु॰ कुटमेव कौटं तत्र जातः। कुटजवृक्षे रायमुकुटः

**कौटजभारिक** त्रि॰ कुटजस्य भारं हरति वहत्यावहति वा वंशा॰ठञ्। १कुटजभारहारिणि २तद्वाहके ३तदावहके च

**कौटजिक** त्रि॰ कुटजं भारभूतं हरति वहति आवहति वा ठञ्। भारभूतकुटजस्य १हारके २वाहके ३आवाहके च

**कौटतक्ष** पु॰ कौटः स्वतन्त्रः तक्षा टच् समा॰। स्वतन्त्रे तक्षणि

**कौटल्य** न॰ कुट-कलच् स्वार्थे ष्यञ्। कौटिल्यशब्दार्थे हेमच॰

**कौटसाक्ष्य** न॰ कूटसाक्षिणोभावः कर्म्म वा ष्यञ्। मिथ्यासाक्ष्ये "कौटसाक्ष्यं सुहृद्वधः" मनुना सुरापाणसमानतोक्त्या तस्यानुपातकता। कौटसाक्ष्यदण्डश्च मनुना दर्शितो यथा

"यस्मिन् यस्मिन् विवादे तु कौटसाक्ष्यं कृतं भवेत्। तत्तत् कार्य्यं निवर्त्तेत कृतञ्चाप्यकृतं भवेत्। लोभान्मोहाद्भयान्मैत्रात् कामात् क्रोधात्तथैव च। अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते। एषामन्यतमे स्थाने यः साक्ष्यमनृतं वदेत्। तस्य दण्डविशेषांश्च प्रवक्ष्याम्य-

नुपूर्व्वशः। लोभात् सहस्रं दण्ड्यस्तु मोहात् पूर्व्वन्तु साहसम्। भयाद्द्वे मध्यमे दण्ड्यो मैत्रात् पूर्व्वं चतुर्गुणम्। कामाद्दशगुणं पूर्वं क्रोधात्तु त्रिगुणं परम्। अज्ञानाद् द्वे शते पूर्णे बालिश्याच्छतमेव तु। एतानाहुः कौटसाक्ष्ये प्रोक्तान् दण्डान्मनीषिभिः। धर्म्मस्याव्यभिचारार्थमधर्म्मनियमाय च। कौटसाक्ष्यन्तु कुर्व्वाणांस्त्रीन् वर्णान् धार्म्मिको नृपः। प्रवासयेद्दण्डयित्वा ब्राह्मणन्तु विवासयेत्"।

**कौटि** पुंस्त्री कूटस्यापत्यम् इञ्। कूटस्य मिथ्याशंसिनोऽपत्ये स्त्रियां तु क्रौड्यादि॰ ष्यङ्। कौट्या

**कौटिक** त्रि॰ कूटेन मृगबन्धनयन्त्रेण चरति ठक्। मांसविक्रयोपजीविनि अमरः। कूट+चतुरर्थ्यां कुमु॰ ठक्। कूटसन्निकृष्टदेशादौ त्रि॰।

**कौटिलिक** त्रि॰ कुटिलिका व्याधानां गतिभेदः कर्म्मारोपकरणभूतं लौहञ्च तया हरति मृगान् अङ्गारान् वा। "अण् कुटिलिकायाः" पा॰ अण्। १व्याधे २कर्म्मकारे च सि॰ कौ॰।

**कौटिल्य** न॰कुटिलस्य भावः ष्यञ्। १वक्रीभावे "नित्यं कौटिल्ये गतौ" पा॰। "कौटिल्यं कचनिचये करचरणाधरतलेषु रागस्ते" का॰प्र॰ तच्चोपपातकम् "कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम्" या॰ स्मृतेः। उपपातकशब्दे विवृतिः। स्वार्थे ष्यञ्। २चाणक्यमुनौ पु॰ राजनि॰ "आकर्ण्य आःज्ञातम्। कौटिल्यः—कुटिलमतिः स एव येन क्रोधाग्नौ प्रसभमदाहि नन्दवंशः" मुद्राराक्षसम्

**कौटीगव्य** पुंस्त्री कुटीगोरृषिविशेषस्य गोत्रापत्यम् गर्गा॰ यञ्। कुटीगोर्ऋषेर्गोत्रापत्ये। तस्य छात्रः कण्वादि॰ अण् यलोपः। कौटीगव, तच्छात्रे। [ देशादौ

**कौटीय** त्रि॰ कूट+चतुरर्थ्यां छशाखा॰ छण्। कूटसन्निकृष्ट-

**कौटीर्य्य** त्रि॰कुटीरः केवल एव स्वार्थे ष्यञ्। केवले असहाये। कौटिरीर्य्या यस्याः। २दुर्गायाम् स्त्री "कौटीर्य्यां मदिरां चण्डामिलां मलयवासिनीम्" हरिवं॰ १७८अ॰

**कौटुम्ब** त्रि॰ कुटम्बं तद्भरणं प्रयोजनमस्य अण्। कुटुम्बभरणोपयोगिद्रव्ये। आहरेदित्यनुवृत्तौ "अन्यथा कौटुम्बम्" आश्व॰ गृ॰ सू॰ २,६.१०,

**कौटुम्बिक** त्रि॰ कुटम्बे तद्भरणे प्रसृतः ठक्। कुटुम्बभरणे व्यापृते "कौटुम्बिकः क्रुध्यति वै जनाय" भाग॰ ५,५, १२.८.। कुटुम्बे भवः ठक्। २कुटुम्बमध्यपातिनि। "यत्र कौटुम्बिका दारापत्यादयोनाम्ना, कर्म्मणा वृकसृगाला एव" भाग॰ ५,१४,५,

**कौटा** स्त्री कूटस्यापत्यम् इञ् स्त्री कौटिः सैव क्रौड्या ष्यङ्। १कूटापत्यस्त्रियाम् कूट+चतुरर्थ्याम्। संकाशा॰ ण्य। २कौट्य कूटसन्निकृष्टदेशादौ त्रि॰

**कौठारिकेय** त्रि॰ स्वल्पा कुठारी कुठारिका तस्याः इदम् शुभ्रा॰ ढक्। स्वल्पकुठारसम्बन्धिनि

**कौडविक** त्रि॰कुडवस्य वापः ठञ्। कुडववापयोग्ये क्षेत्रादौ कुडवं तत्परिमितमन्नं सम्भवति पचति अवहरति वा ठक्। २स्वस्मिन् कुडवमितान्नसमावेशके कटाहादौ ३तत्पाचके सूदादौ ४तदवहारके च स्त्रियां ङीप्। कुडवः परिमाणमस्य ठञ्। ५कुडवपरिमिते। संख्यापूर्व्वकत्वे पूर्व्वपदस्य न वृद्धिः द्विकौडविकः। अर्द्धपूर्व्वकस्य तु वा वृद्धिः आ(अ)र्द्धकौडविकः। असंज्ञायान्तु ठञोलुक्। द्विकुडवम् अर्द्धकुडवम् इत्यादि।

**कौड्यक** त्रि॰ कुड्ड—काकर्श्ये ण्यत् संयोगादिलोपः कुड्या तत्र जातादि कच्छ्या॰ ढकञ् "कुड्याया यलोपश्च" पा॰ ग॰यलोपः। कार्कश्यकरणार्हायां भूमौ जातादौ

**कौणकुत्स्य** पु॰ ऋषिभेदे। "भरद्वाजः कौणकुत्स्य आर्ष्टिषेणोऽथ गौतमः" भा॰ आ॰ ८अ॰।

**कौणप** पु॰ कुणपः शवः भक्ष्यत्वेन विद्यतेऽस्य, अण् कुणपस्तद्भक्षणं शीलमस्य ण वा। राक्षसे अमरः "न कौणपाः श्रृङ्गिणो वा न देवा नच भा॰आ॰१७०अ॰मानुषाः" स्त्रियां ङीष्

**कौणपदन्त** पु॰ कौणपस्य दन्ताइव दन्ता अस्य। भीष्मे त्रिका॰

**कौणपाशन** पु॰ कौणपानामशनमिवाशनमस्य। सर्पभेदे "हस्तिपिण्डः पिठरकः सुमुखः कौणपाशनः" भा॰ आ॰ ३५अ॰ नागनामोक्तौ

**कौण्डपायिन्** पु॰ ब॰व॰ कुण्डमेव कौण्डं तेन पिबति सोमं पा—णिनि। सोमयागकारियजमानभेदेषु।

**कौण्डपायिन** न॰ कुण्डपायिनामिदम् अण् नि॰ प्रकृतिभावः। कुण्डपायिनां (कुण्डेन सोमपायिनाम्) सम्बन्धिनि अयनरूपे सत्रभेदे कुण्डपायिनामयनशब्दे विवृतिः।

**कौण्डल** त्रि॰ कुण्डलमस्त्यस्य ज्योत्स्ना॰ अण्। कुण्डलयुक्ते त्रि॰ स्त्रियां ङीप्। [ सन्निकृष्टदेशादौ

**कौण्डलिक** त्रि॰ कुण्डल+चतुरर्थ्यां कुमु॰ ठक्। कुण्डल

**कौण्डाग्नक** त्रि॰ कुण्डस्येदमण् कौण्डे अग्नौ भवः वृद्धादग्न्युत्तरपदत्वात् वुञ्। कुण्डसम्बन्धिवह्निभवे

**कौण्डायन** त्रि॰ कुण्डस्यादूरदेशादि पक्षा॰ चतुरर्थ्यां फक्। कुण्डसन्निकृष्टादेशादौ [कुण्डिननगरजातादौ

**कौण्डिनेयक** त्रि॰ कुण्डिने जातादि कच्छ्या॰ ढकञ्।

कौण्डिन्य पुंस्त्री कुण्डिनस्यर्षेर्गोत्रापत्यं गर्गा॰ यञ्। कुण्डिन गोत्रापत्ये। "कौण्डिन्यात् कौण्डिन्य" शत॰ ब्रा॰ १४।५।५।२०। स्त्रियां तु ङीपि यलोपः "पाराशरकौण्डिनीपुत्रात् पाराशरकौण्डिनीपुत्रः" शत॰ ब्रा॰ १४।९।४।३० वंशब्राह्मणे। कुण्डिनस्य युवापत्यम् गर्गा॰ यञि यञन्तात् फक्। कौण्डिन्यायन कुण्डिनस्य युवापत्ये पुंस्त्री "कौण्डिन्यायनाच्च कौण्डिन्यायनः" शत॰ ब्रा॰ १४।५।५।२०। कौण्डिन्यस्य छात्रः कण्वा॰ अण् यलोपश्च। कौण्डिन कौण्डिन्यस्यच्छात्रे। बहुषु अणो लुक् कुण्डिनादेशश्च कुण्डिनः। स्त्रियां तु न लुक् किन्तु गोत्रत्वात् ङीष्यलोपौ कौण्डिनी।

कौण्डिल्यक पु॰ १सुश्रुतोक्ते शकृन्मूत्रविषे जन्तुभेदे विषशब्दे विवृतिः। २तत्रोक्ते कीटभेदे च कीटशब्दे विवृतिः

कौण्डोपरथ पु॰। आयुधजातिसंघे ततः स्वार्थे छ। कौण्डोपरथीय तदर्थे। "दाण्डकिगर्त्तषष्ठांस्तु कौण्डोपरथदाण्डकाः क्रौष्टुकिर्जालमानिश्च ब्रह्मगुप्तोऽथ जालकिः" सि॰ कौ॰। [ तस्कुतोभवे।

कौतस्कुत त्रि॰ कुतः कुतोभवः अण् टिलोपः कास्का॰। कु-

कौतस्त त्रि॰ कुतस्त्यो भवः अण् नि॰ वेदे यलोपः। कुतस्त्यभवे। "कौतस्तावध्वर्यू अभिजयश्च जनमेजयश्च" पारा॰ ब्राह्म॰।

कौतुक न॰ कुतुकस्य भावः युवादि॰ अण् प्रज्ञा॰ स्वार्थे अण् वा। १कुतूहले अमरः। तच्च अद्भुतजिज्ञासातिशयः। "कौतुकागारमागात्" कुमा॰। २मङ्गलार्थहस्तसूत्रे शाश्वतः "वैवाहिकैः कौतुकसंविधानैः" कुमा॰। ३उत्सवे ४अभिलाषे ५नर्म्मणि ६हर्षे ७परम्परायातमङ्गले ८गीतादिभोगे ९भोगकाले च हेम॰।

कौतूहल न॰ कुतूहलस्य तद्वतस्य भावः कर्म्म वा युवा॰ अण् प्रज्ञादि॰ स्वार्थे अण् वा। कुतूहले "विस्तरश्रवणे जातं कौतूहलमतीव मे" भा॰ आ॰ ६२अ॰। "महत् कौतूहलं मेऽस्ति हरिश्चन्द्रकथां प्रति" मार्क॰ ८।१।

कौतूहल्य न॰ कुतूहल+ब्राह्मणा॰ स्वार्थे ष्यञ्। कुतूहले

कौतोमत पु॰ कुतोमतस्यापत्यम् ऋष्यण्। ऋषिभेदे। "महमहवासुरोपिपत्य इति कौतोमतेन" गोपथब्राह्मणम्।

कौत्स पुंस्त्री कुत्सस्य ऋषेरपत्यम् ऋष्यण्। कुत्सापत्ये "भूर्भुवः स्वरिति जपित्वा कौत्सोऽग्निह्वरोति" आश्व॰ श्रौ॰ सू॰ १।२।५। "कौत्साय दत्त्वा कन्यान्तु हंसीं नाम यशस्विनीम्" भा॰ आनु॰ १२७अ॰। "कौत्सः प्रपेदे वरतन्तुशिष्यः" रघुः। बहुषु तस्य लुक्। कुत्साः तदपत्येषु। कुत्सेन दृष्टं साम अण्। कुत्सर्षिदृष्टे विश्वजित्यागे गेये सामभेदे। तच्च साम वेमाने १६प्र॰ २अर्द्धे १०गानम्। "कौत्सं भवति काण्वं भवति" श्रुतिः।

कौथुम त्रि॰ कुथुमं वेदशाखाभेदमधीते वेद वा अण्। १कुथुमशाखाध्यायिनि तद्वेत्तरि च। तस्य कार्त्तकौजपादित्वात् द्वन्द्वे पूर्वपदं प्रकृत्या। कठकौथुमाः इत्यादि। "अनुवादे चरणानाम्" पा॰ द्वन्द्वे एकवत् प्रत्युदात् कठकौथुमम्। "स्थेणोर्लुङि" वार्त्ति॰ स्थाधातोरिण्धातोश्च लुङ्प्रयोग एव तस्य तथात्वं नियमितम् [ ब्राह्म॰ जातिशब्दे विवृतिः

कौद्दालीक पुंस्त्री॰ रजक्यां तीवराज्जाते संकीर्णवर्णभेदे

कौद्रविक न॰ कोद्रवो निमित्तमस्य ठञ्। सौवर्च्चललवणे राजनि॰ [ धान्यभवनयोग्ये क्षेत्रे अमरः

कौद्रवीण न॰ कोद्रवस्य भवनं क्षेत्रं कोद्रव+खञ्। कोद्रव

कौद्रा(न्द्रा)यण पुंस्त्री॰ कद्र(न्द्र)स्य ऋषेर्युवापत्यम् इञ कौद्रिः(न्द्रिः) इञन्तत्वात् यून्यपत्ये फक्। कुद्रि(न्द्रि) नामर्षेर्युवापत्ये ततः अरीह॰ चातुरर्थ्यां वुञ्। कौन्द्रायणक तत्सन्निकृष्टदेशादौ त्रि॰

कौनख्य न॰ कुनखिनो भावः ष्यञ् टिलोपः। कुत्सितनखरूपे रोगभेदे तच्च सुवर्णस्तेयमहापातकजचिह्नम् "सुवर्णचौरः कौनख्यम्" मनूक्तेः। [ निवृत्तादौ

कौन्तायनि त्रि॰ कुन्ती+चतुरर्थ्यां कर्णा॰ फिञ्। कुन्ती-

कौन्तिक कुन्तः प्रहरणमस्य ठञ्। कुन्तास्त्रे युद्धकारके अमरः। [ षष्ठी अमरः

कौन्ती स्त्री कुन्तिषु देशेषु भवा अण् ङीप्। सम्भलिन्यो-

कौन्तेय पु॰ कुन्त्या अपत्यम् ढक्। १युधिष्ठिरादिषु त्रिषु। "कौन्तेय! प्रतिजानीहि न मे कर्म्मफले स्पृहा" गीता २अर्ज्जुनवृक्षे राजनि॰ तस्य तन्नामत्वात्तथात्वम्।

कौप त्रि॰ कूपस्येदमण्। कूपसम्बन्धिनि जलादौ "क्षारं पित्तलं कौपं श्लेष्मघ्नं दीपनं लघु" सुश्रुते तद्गुणा उक्ताः। "वसन्ते कौपं प्रास्रवणं वा ग्रीष्मेष्वेवम्" सुश्रुतोक्तकाले तस्य सेव्यता। स्त्रियां ङीप्।

कौपीन न॰ कूपे पतनमर्हति खञ् अकार्य्ये नि॰। १अकार्य्ये २पापे ३गुह्यप्रदेशे अमरः ४चीरे त्रिका॰ ५मेखलाबद्धे वस्त्रखण्डे (कप्नी) मेदि॰ तद्वारणेन कूपे पतनात् तस्य तथात्वम्। अकार्य्यवदाच्छाद्यत्वात् ६पुरुषलिङ्गे शब्दचि॰। तदावरकतया वस्त्रखण्डस्य कौपीनत्वम्। "कौपीनवन्तः खलु भाग्यवन्तः" पुरा॰ "कौपीनाच्छादनं यावत्तावदिच्छेच्च

चीवरम्" भा० आ० ८१अ०। "अवलाखल्पकौपीनाः सुहृदः सत्यजिष्णवः" भा०अनु०४६अ०। [रूपकोषः।

कौपोद्की स्त्री कौमोदकी पृषो०। विष्णुगदायां हि-

कौमार पु० अपूर्व्वपतिकां कुमारीमुपपन्नः पतिः "कौमारापूर्व्ववचने" पा० नि०। अपूर्व्वपतिकायाः कुमार्य्याः १वोढरि। कुमारस्य भावः "प्राणभृद्‌वयोवचनत्वात् अञ्। "जातः क्रं हृषिर्भी मद्गर्भे भारयेत् स कुमारकः। इति प्रधानतो विद्धि कौमारं प्रागभवावदतः" इत्युक्तावधिके "कौमारं पञ्चमावधि" इत्युक्ते २वयोवस्थाभेदे न०। "देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा" गीता। "पिता रक्षति कौमारे भर्त्ता रक्षति यौवने" मनुः। कुमार एव स्वार्थे अण्। ३कुमारे शब्दचिन्ता०। कुमारस्य सनत्कुमारस्येदम् अण्। ४सर्गभेदे पु०स च सर्गः सनत्कुमारादिसर्व्जनपूर्व्वकत्वात् तन्नामकः। "कौमार आर्षः प्राजापत्यौसानव इत्यादि सर्गनामानि" श्रीधरः। "सएव प्रथमं देवः कौमारं सर्गमाश्रितः। चचार दुश्चरं ब्रह्मा ब्रह्मचर्य्यमखण्डितम्" भाग० १,३,७, "वैकारिकस्तु यः प्रोक्तः "कौमारस्तूभयात्मकः" भाग० ३,१०,२०,५, ५कुमारसम्बन्धिनि त्रि० "तत्र विद्याव्रतस्नातः कौमारं व्रतमास्थितः" भा० व० ८५अ०

कौमारायण पुंस्त्री० कुमारस्य गोत्रापत्यं नड़ा० फक्। कुमारनामकर्षिगोत्रापत्ये। [कानीने

कौमारिकेय पुंस्त्री० कुमारिकाया अपत्यं शुभ्रा० ढक्।

कौमारी स्त्री अपत्नीकं कुमारं पतिमुपपन्ना स्त्री "कौमारापूर्व्ववचने" पा०नि०ङीप्। १अगृहीतदारान्तरस्य पत्युः १भार्य्यायाम्। कुमारस्येयमण् ङीप्। २कुमार सम्बन्धिचेष्टादौ "कौमारीं दर्शयंश्चेष्टाम्" भाग०२,२,२८, कुमारस्य कार्त्तिकेयस्येयम् अण् ङीप्। ३कार्त्तिकेयशक्तौ। "कौमारी शक्तिहस्ता च मयूरवरवाहना। योद्धुमभ्याययौ क्रुद्धं रक्तबीजं महासुरम्" कौमारीशक्तिनिर्भिन्नाः केचिन्नेशुर्महासुराः" देवीमाहात्म्यम्

कौमुद पु० "कौ मोदन्ते जनायस्मिन् कौमुदस्तेन कीर्त्तितः" इत्युक्तलक्षणे १कार्त्तिकमासे। "एतैरन्यैश्च राजेन्द्रैः पुरा मांसं न भक्षितम्। शारदं कौमुदं मासं ततस्ते स्वर्गमाप्नुयुः। कौमुदं तु विशेषेण शुक्लपक्षं नराधिप!। वर्ज्जयेत् सर्व्वमांसानि धर्म्मोऽत्र विधीयते" म०त०भार०

कौमुदी स्त्री कुमुदस्येयं प्रकाशकत्वात् प्रिया अण् ङीप्। १ज्योत्स्नायाम् अमरः। "शशिना सह याति कौमुदी" "कुमा०१तद्वत्प्रकाशिकायाम् "त्वमस्य लोकस्य च नेत्रकौमुदी" कुमा० कौमुदस्येयम् अण् ङीप्। "कुशब्देन मही ज्ञेया मुद हर्षे० ततोद्वयम्। धातुज्ञैर्नियमैश्चैव तेन सा कौमुदी स्मृता" इत्युक्तायां २कार्त्तिकपौर्णमास्यां "कौ मोदन्ते जनायस्यामानाभावैः परस्परम्। हृष्टास्तुष्टाः सुखापन्नास्तेन सा कौमुदी मता" इत्युक्तायाम् ३आश्विन पौर्णमास्याम् "आश्विने पौर्णमास्यान्तु चरेज्जागरणं निशि कौमुदी सा समाख्याता कार्य्या लोकविभूतये" ति० त० लिङ्गोक्तेः। ४दीपोत्सवतिथौ दीपोत्सवतिथिं प्रकृत्य भविष्योत्तरे "कौ मोदन्ते जनायस्यां तेन सा कौमुदी मता" "सखीजनोद्गीतकलाकौमुदीमुखम्" रघुः कौमुदी दीपोत्सवतिथिः" इति मल्लि० "५उत्सवे धरणिः" ६कार्त्तिकोत्सवे त्रिका०। स्वार्थे क। ह्रस्वे कौमुदिका ज्योत्स्नायाम्। संज्ञायां कन्। ७मासखीभेदे शब्दरत्ना० कुमुद+चतुरर्थ्यां कुमुदा० ठक्। कौमुदिक कुमुदसन्निकृष्टदेशादौ त्रि०

कौमुदीचार पुंन० कौमुद्या ज्योत्स्नाया चारः प्राशस्त्यमत्र काले। आश्विनपौर्णमास्याम् त्रिका०

कौमुदीपति पु० ६त०। चन्द्रे हारा०कौमुदीनाथादयोऽप्यत्र

कौमुदीवृक्ष पु० कौमुद्याः प्रकाशिकायाः दीपशिखाया वृक्ष इवाधारः। दीपवृक्षे (पिलुसुज) हारा०

कौमोदकी स्त्री कोः पृथिव्याः पालकत्वात् मोदकः कुमोदको विष्णुः तस्येयम् अण्। विष्णुगदायाम् अमरः "कौमोदकी मोदयति स्म चेतः" माघः। "दैत्यैरनादिवीर्य्यस्य गदा तस्यापरे करे। निक्षिप्ता कुमुदाख्यस्य नाम्ना कौमुदकीति सा" हरि० ६०अ०

कौमोदी स्त्री कुं मोदयति अण् कुमोदः विष्णुस्तस्येयमण् ङीप्। विष्णुगदायाम् शब्दरत्ना०

कौम्भकारि पुंस्त्री० कुम्भकारस्यापत्यं शिल्पित्वात् पक्षे इञ्। कुम्भकारापत्ये स्त्रियां वा ङीप्। पक्षे अञ्। कौम्भकार्य्य तत्रार्थे।

कौम्भायन त्रि० कुम्भस्य सन्निकृष्टदेशादि पक्षा० फक्। कुम्भसन्निकृष्टदेशादौ [ष्टदेशादौ

कौम्भायनि त्रि० कुम्भ+चतुरर्थ्यां कर्णा०फिञ्। तत्सन्निक-

कौम्भेयक त्रि० कुम्भ्यां जातादि कत्र्या० ढकञ्। कुम्भी जातादौ [कृष्टदेशादौ

कौम्भ्र त्रि० कुम्भ+चतुरर्थ्यां सङ्काशा० ण्य। कुम्भसन्नि-

कौरयाण पु० कुरयाणस्य (शत्रुं प्रति कृतयानस्य) अयम् अण् वेदे पृषो०। शत्रुं प्रति कृतयानस्य सम्बन्धिनि तत्पुत्रादौ

"पाकस्य सा कौरयाण:" ऋ० ८।३।२१ तद्भाष्ये तथार्थोक्तेः

**कौरव** पुंस्त्री० कुरोरपत्यादि उत्सा० अञ् तद्देशस्य राजा अण् तेषु भवो वा अण्। १कुरुवंश्ये "तस्यान्ववायः सुमहान् यस्य नाम्ना स्म कौरवाः। कुरोस्तु पुत्रास्चत्वारः" हरिवं ६२अ०। २तद्देशनृपे पु० ३कुरुसम्बन्धिनि ४तद्देशभवे च त्रि०। स्त्रियां ङीप्। "द्रुपदः कौरवान् दृष्ट्वा प्राधावत समन्ततः। शरजालेन महता मोहयन् कौरवीं चमूम्" भा० आ० १३८अ० "क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः" मेघदूतम्।

**कौरवक** त्रि० कुरौ तद्वंशे जातादि "विभाषा कुरुयुगन्धराभ्याम्" पा० वा वुञ्। १कुरुवंशोद्भवे। कुरवकस्येदमण्। २कुरवकसम्बन्धिनि

**कौरवायणि** पुंस्त्री कुरोरपत्यम् तिका० फिञ्। कुरुवंश्ये

**कौरवेय** पुंस्त्री कुरोपत्यं वा० ढक्। कुरुवंशे्य। "समा हि कौरवेयाणां वयं ते चैव पुत्रक!" भा० आ० १४२अ०। "विमोक्ष्यन्ति विषं क्रुद्धाः कौरवेयेषु भारत!" भा० व० ८अ०।

**कौरव्य** पुंस्त्री० कुरोवपत्यम् कुर्व्वादि० ण्य। १कुरुवंश्ये। "कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलम्" वेणीसं०। तस्यापत्यं तिका० फिञ्। कौरव्यायणि कुरुकुलोत्पन्ने ब्राह्मणादावपत्ये पुंस्त्री कुरूणां राजा ण्य। २कौरव्य कुरुदेशराजे। स्त्रियां ङीप् कौरव्यी स्त्री। ण्यान्तत्वात् यून्यपत्ये फिञो लुक्। कौरव्यः पिता पुत्रश्च सि० कौ०।

**कौरुकत्य** पुंस्त्री कुरुकतस्यर्षेरपत्यम् गर्गा० यञ्। कुरुकतस्यर्षेरपत्ये युवापत्ये फिञ्। कौरुकत्यायनि तदीय युवापत्ये पुंस्त्री

**कौरुज(जा)ङ्गल** त्रि० कुरुजङ्गले जातादि अण् उत्तरपदस्य वा वृद्धिः। कुरुजङ्गलभवे

**कौरुपाञ्चाल** त्रि० कुरुपञ्चालदेशे प्रसिद्धः अण् उभयपद वृद्धिः। कुरुषु पञ्चालेषु च प्रसिद्धे। "प्रज्ञातं कौरुपाञ्चालं यज्ञतरवत्तम्" शत०ब्रा० १,७,२,८, कौरुपाञ्चालो वा अयं ब्रह्मा ११।४।१।२।

**कौप्य** पु० "क्रियतावुरिजित्तमकुलीरलेयपाथेययूककौर्प्याख्याः। तौक्षिक आकोकेरो हृद्रोगश्चान्त्यभं चेत्थम्" दीपिकोक्ते वृश्चिकराशौ।

**कौर्म्म** न० कूर्म्ममधिकृत्य कृतो ग्रन्थः अण्, कूर्म्मस्येदम् अण् वा। १कूर्म्मपुराणे २कूर्म्मसम्बन्धिनि त्रि०।

**कौल** त्रि० कुले भवः शिभिन्नः अण्। सत्कुलभवे १कुलीने युनि तु कौलेयक इत्येव। कुले कुलाचारे रतः तं वेत्ति वा अण्। २तन्त्रोक्तकुलाचाररते ३तदाचारवेदिनि च। "दिव्यभावरतः कौलः सर्व्वत्र समदर्शनः" कुलार्णवः। 'पशोर्वक्त्राल्लब्धमन्त्रः पशुरेव न संशयः। वीराल्लब्धमनुर्वीरः कौलाच्च ब्रह्मविद्भवेत्" महानीलतन्त्रम्। कुलं कुलाचारमधिकृत्य कृतो ग्रन्थः अण्। ४कुलाचारप्रवर्त्तके ग्रन्थे कौलोपनिषदादौ।

**कौलक** त्रि० कूले भवः सौवीरः धूमा० वुञ्। कूलभवे सौवीरे

**कौलकेय** त्रि० कुले सत्कुले भवः वा० ठक् कुक् च। १सत्कुलोद्भवे। कौलटेय+पृषो०। २असतीपुत्रे पुंस्त्री शब्दरत्ना०।

**कौलटिनेय** पुंस्त्री भिक्षुक्याः सत्या अपत्यम् ढक् इनादेशश्च। सत्या भिक्षुक्याः अपत्ये अमरः स्त्रियां ङीप्

**कौलटेय** पुंस्त्री कुलटायाः सत्याः असत्या वा अपत्यम् ढक्। सत्याः असत्याश्च भिक्षुक्याः अपत्ये अमरः। स्त्रियां ङीप्।

**कौलटेर** पुंस्त्री कुलटायाः असत्या अपत्यम् आचारेण क्षुद्रत्वात् ("क्षुद्राभ्यः") पा० ढ्रक्। बन्धक्याः अपत्ये अमरः।

**कौलत्थ** त्रि० कुलत्थेन संस्कृतम् अण्। कुलत्थसंस्कृते "पायये च्चाम्लकौलत्थसुरासौवीरकादिभिः" सुश्रु०।

**कौलत्थीन** न० कुलत्थस्य भवनं क्षेत्रम् खञ्। कुलत्थोत्पत्तियोग्ये क्षेत्रे

**कौलपुत्रक** न० कुलपुत्रस्य भावः मनोज्ञा० वुञ्। कुलपुत्रभावे

**कौलव** पु० ववादिषु तृतीये तिर्य्यग्रूपे चरकरणभेदे। करणशब्दे १६६०० पृ० स्थितिः

**कौलालक** त्रि० कुलालेन कृतं संज्ञायां वुञ्। कुलालकृते शरावादौ असंज्ञायान्तु अण् कौलाल तत्कृते। तस्येदमण् कौलाल तत्सम्बन्धिनि त्रि० "रथचक्रं वा कौलालचक्रं वा" शत० ब्रा० ११।८।४।१

**कौलिक** त्रि० कुलादागतः ठक्। १कुलपरम्परागते आचारादौ। कुले कुलागमे सिद्धः ठक्। तन्त्रोक्ते २कुलाचारे। कौलं कुलधर्मं प्रवर्त्तयति ठक्। ३कुलधर्मप्रवर्त्तके शिवे। शब्दमा०। ४पाषण्डे त्रिका०। कुलं तदाचारः प्रयोजनमस्य ठक्। ५कौले ब्रह्मविदि "यच्च: कौलिकः" स्मृतिः

**कौलितर** पु० कुलितरस्यापत्यम् ऋष्यण्। शम्बरासुरे "उत दासं कौलितरं बृहतः पर्व्वतादधि। अवाहन्निन्द्र शम्बरम्" ऋ० ४।३०।१४ कुलितरनाम्नोऽपत्यं शम्बरमसुरम्" भा०

**कौलिशायनि** त्रि० कुलिश+चतुरर्थ्यां कर्णा० फिञ्। कुलिश सन्निकृष्टदेशादौ

कौलिशिक त्रि॰ कुलिश+अङ्गुल्या॰ इवार्थे ठक्। कुलिशसदृशे

कौलीन त्रि॰ कौ पृथिव्यां लीनः ७त॰ अलुक् स॰। १भूमिलग्ने। कुलादागतः खञ्। २कुलक्रमागते "सदृच इवमर्य्यादां कौलीनां नाभ्यवर्तत" रामा॰ आ॰८७ अ॰। ली-भावे क्त कौ लीनं लयो यस्मात्, कुलीनं भूमिलग्नतद्भीत अण् वा। भूमिलग्नतासूचने ३अपवादे "कौलीनमात्माश्रयमाचचक्षे" "कौलीनभीतेन गृहान्निरस्ता" रघुः "मा कौलीनाद्दलितनयने! मय्यविश्वासिनी भूः" मेघः अपवादे हि भूमिलग्न इव लोको भवतीति तस्य तथात्वम्। ४गुह्ये ५जन्ये (युद्धे) ६कुकार्य्ये ७पशुसर्पाणां युद्धे च न॰ मेदि॰ तेषां भूमिलग्नतासाधनत्वात्तथात्वम्।

कौलीरा स्त्री कुलीरः तच्छृङ्गाकारोऽस्त्यस्याः अच्। कर्कटशृङ्ग्याम् (काँकडाशिङा) राजनि॰

कौलेय त्रि॰ कुले+भवः वा॰ ढक्। सत्कुलोत्पन्ने भरतः

कौलेयक पु॰ कुले भवः श्वा ढकञ्। १कुलागते कुक्कुरे। अमरः २सत्कुलीने मेदि॰।

कौलेशभैरवी स्त्री त्रिपुराभैरवीभेदे। "सम्पत्प्रदाभैरवीवत् विद्धि कौलेशभैरवीम्। कुलाद्याः सैव देवेशि! त्रिषु बीजेषु पार्वति!" ज्ञानार्णवः। "त्रिकूटे हसाद्यावेत् तदा कौलेशभैरवी भवति" तन्त्रसारः

कौल्माषिक त्रि॰ कुल्माषे साधु ठञ्। कुल्माषसाधने

कौल्माषीण न॰ कुल्माषाणां भवनं क्षेत्रम् खञ्। कुल्माषधान्योत्पत्तियोग्ये क्षेत्रे

कौल्य त्रि॰ कुले भवः ष्यञ्। सत्कुलीने हिरूपकोषः।

कौवल न॰ कुवलमेव प्रज्ञा॰ स्वार्थे अण्। कोलिफले हिरूपको॰।

कौविदार्य्य त्रि॰ कोविदार+चतुरर्थ्यां प्रगद्या॰ ञ्य। कोविदारसन्निकृष्टदेशादौ।

कौवेर त्रि॰ कुवेरस्येदम्, कुवेरो देवताऽस्य वा अण्। १कुवेरसंबन्धिनि २तद्देवताके च "कौवेरमथ याम्यञ्च चक्राते वरुणस्य च" देवीमा॰। "यानं सस्मार कौवेरम्" रघुः। "कौवेरदिग्भागमपास्य मार्गम्" माघः। स्त्रियां ङीप्। "दिग्विभागे तु कौवेरी दिक् श्रियाप्रीतिदायिनी" ति॰त॰ पु॰। "ततः प्रतस्थे कौवेरीम्" रघुः। ३कुष्ठघ्ने (कुड़) न॰ शब्दरत्ना॰। [रिकाया अपत्ये।

कौवेरिकेय पुंस्त्री॰ कुवेरिकाया अपत्यम् शुभ्रा॰ ढक्। कुवे-

कौश न॰ कुशाः भूम्ना सन्त्यत्र अण्। १कान्यकुब्जदेशे हेमच॰। स्वार्थेऽण्। २कुशद्वीपे "शाकं ततः शाल्मलमत्र कौशम्" सि॰ शि॰। कुशशब्दे २१४५ पृ॰ विवृतिः। कुशस्येदं तद्विकारो वा अण्। ३कुशसम्बन्धिनि ४तन्मये पवित्रादौ। "तत्र वासाय शयने कौशे सुखमुवास ह" भा॰ अनु॰ १६ अ॰। स्त्रियां ङीप्। "कौश्यां बृस्यां समासीनम्" भा॰ अनु॰ ५४ अ॰

कौशल न॰ कुशलस्य भावः युवा॰ अण्। दक्षतायाम् "सौमेव पद्मासनकौशलस्य" भट्टिः। "आन्वीक्षिकी कौशलानाम्" "योगः कर्म्मसु कौशलम्" गीता। "हावहारि हसितं वचनानां कौशलं दृशि विकारविशेषः" माघः।

कौशलि पुंस्त्री॰ कुशलाया अपत्यं बाह्वा॰ इञ्। कुशलाया अपत्ये स्त्रियां वा ङीप्। यून्यपत्ये फञ्। कौशलायन तदीययुवापत्ये पुंस्त्री

कौशलिका स्त्री कुशलस्य पृच्छा ठक्। १कुशलप्रश्ने। कुशलाय मङ्गलाय दीयते ठक्। २उपायने उपढौकने। त्रिका॰। [ढौकने २कुशलप्रश्ने च त्रिका॰।

कौशली स्त्री कुशलाय दीयते तस्य पृच्छा वा अण्। १उप-

कौश(स)लेय स्त्री कौश(स)ल्याया अपत्यं ढक् यलोपः। श्रीरामे दशरथपुत्रे

कौशल्य न॰ कुशलमेव ब्राह्म॰ ष्यञ्। १कुशले। भावे ब्राह्म॰ ष्यञ्। २दक्षतायाम्। "दृष्ट्वा कौशल्यमन्योन्यं रथस्थेवावतस्थिरे" भा॰ व॰ २४४ अ॰

कौश(स)ल्या स्त्री कोश(स)लदेशे भवा ञ्य। कोश(स)लदेशभवायां श्रीराममातरि दशरथपत्नीभेदे। [द्योऽत्र।

कौश(स)ल्यातनय पु॰ ६त॰। सीतापतौ श्रीरामे तत्सुता-

कौश(स)ल्यायनि पु॰ कौश(स)ल्याया अपत्यम् फिञ्। श्रीरामे त्रिका॰ "स्थियामहे न गच्छामः कौश(स)ल्यायनिवल्लभाम्" भट्टिः। कौश(स)ल्य पर्य्यायकता जयमङ्गलयासुक्ता।

कौशाम्ब त्रि॰ कुशाम्बेन निर्वृत्तः अण्। १कौशाम्बराजकृते २तत्कृते पुरीभेदे स्त्री ङीप्। "कुशाम्बस्तु महातेजाः कौशाम्बीमकरोत् पुरीम्" रामा॰। साच पुरी गौडदेशान्तर्गतवत्सभूमिगता। "अस्ति वत्स इति ख्यातो देश इत्युपक्रमे" कौशाम्बी नाम तत्रास्ति मध्यभागे महापुरी" कथासरित्सागरः। "अस्ति गौडविषये कौशाम्बीनाम नगरी" हितो॰। "निष्कौशाम्बिः" सि॰ कौ॰

कौशाम्बेय पुंस्त्री कुशाम्बस्य गोत्रापत्यम् शुभ्रा॰ ढक्। कुशाम्बवंश्ये

कौशिक न॰ कुशिकस्यापत्यं ऋष्यण् कुशेन कृतः अध्या॰ ठञ् कुशिके तद्वंशे भवः अण् वा। १इन्द्रे २पेचके पुंस्त्री॰ उभयत्र "अग्राणुवन् सोढुमभीरलोचनः सहस्ररश्मेरिव

वस्य दर्शनम् । प्रविश्य हेमाद्रिगुहागृहान्तरं निनाय विश्वामित्रस्तानि कौशिकः” माघः । इन्द्रस्य कुशिकपुत्रत्व-प्राप्तिकथा “कुशिकस्तु तपस्तेपे पुत्रमिन्द्रसमप्रभम् । लभेयमिति तं शक्रस्त्रासादभ्येत्य जज्ञिवान् । स गाधि-रभवद्राजा मघवान् कौशिकः स्वयम्” हरिवं० १अ० । “कुशिकस्तु तपस्तेपे” इत्युपक्रम्य “तस्य ज्ञात्वा तपस्तीव्रं सहस्राक्षः पुरन्दरः । समर्थं पुत्रजनने स्वमेवांशमवासयत् । पुत्रत्वे कल्पयामास स देवेन्द्रः सुरोत्तमः । स गाधि-रभवद्राजा मघवान् कौशिकः स्वयम्” हरिवं० २७अ० । कुशैर्वृतत्वाद्वा कौशिकत्वमस्य यथाह तत्रैव “जातमात्रस्तु भगवानदित्यां स(शक्रः)कुशैर्वृतः । तदा प्रभृति देवेशः कौशिकत्वमुपागतः” हरि० २२७अ० । २गुग्गुलौ ३व्यालग्राहिणि (सपुड़े) अमरः । ४नकुले ५कोशाध्यक्षे मेदि० । ६कोषकारे शब्दरत्ना० ७शृङ्गार-रसे त्रिका० ८मज्जनि हेम० ९अश्वकर्णवृक्षे राज-नि० । कुशिकस्य गोत्रापत्यम् विदा० अञ् । १०विश्वा-मित्रमुनौ स हि कुशिकपुत्रस्य गाधेरपत्यम् । कुशि-कशब्दे तन्मूलं दृश्यम् । “अपिबच्च ततः सोममिन्द्रेण सह कौशिकः” भा० आ० १७५अ० ।

११पौरववंश्ये नृपभेदे । “पारीक्षितस्य द्वौ पुत्रौ” इत्युप-क्रमे “प्रतिष्ठायास्तु द्वौ पुत्रौ पैप्पलादिश्च कौशिकः” हरिव० १९१अ० । जरासन्धनृपस्य हंसनामके १२सेनापतिभेदे “स तु(जरासन्धः)सेनापती ! राजा ससार भरतर्षभ ! । कौ-शिकं चित्रसेनञ्च तस्मिन् युद्धे उपास्थिते । ययोस्ते नामनी राजन् हंसेति डिम्बकेति च” भा० स० २१अ० । तस्य च कौशिकवंश्यत्वात् तथात्वम् । १३असुरभेदे “सङ्ख्मः शा-लवदनः करालः कौशिकः शरः” हरिव० ४२अ० । कुशिकवंशोद्भवत्वात् १४नदीभेदे स्त्री तस्या उत्पत्तिकथा रामा० आ० ३४अ०

“कुशवंशप्रसूतोऽस्मि कौशिको रघुनन्दन ! । पूर्वजा भ-गिनी चापि मम राघव ! सुव्रता । नाम्ना सत्यवती नाम ऋचीके प्रतिपादिता । सशरीरा गता स्वर्गं भर्त्तार-मनुवर्त्तिनी । कौशिकी परमोदारा प्रवृत्ता च महानदी । दिव्यपुण्योदका रम्या हिमवन्तमुपाश्रिता । लोकस्य हितकार्यार्थं प्रवृत्ता भगिनी मम । ततोऽहं हिम-वत्पार्श्वे वसामि नियतः सुखम् । भगिन्यां स्नेहसं-युक्तः कौशिक्यां रघुनन्दन ! । सा तु सत्यवती पुण्या सत्ये धर्मे प्रतिष्ठिता । पतिव्रता महाभागा कौशिकी सरितां वरा”

“तत्र मासं वसेद्वीर ! कौशिक्यां भरतर्षभ ! । अश्वमे-धस्य यत् पुण्यं तन्मासेनाधिगच्छति” भा० व० ८४अ० । “कुशि-कस्याश्रमं गच्छेत् सर्वपापप्रमोचनम् । कौशिकीं तत्र गच्छेत महापापप्रणाशिनीम् । राजसूयस्य यज्ञस्य फलं प्राप्नोति मानवः” तत्रैवाध्याये । “इयञ्च नदी हिमवतः निःसृता चम्पानगरसन्निकृष्टे उत्तरपारे गङ्गायां सङ्गता । “ततो गच्छेत राजेन्द्र ! चम्पकारण्यमुत्तमम्” ततइत्यनो-क्तस्यास्तत्सन्निकृष्टत्वम् । १५यशोदाकन्यात्वेनोत्पन्नायां योगमायायाम् । कौशिकेन्द्रेण भगिनीत्वेन कल्प-नेन विष्णुना तस्यास्तथात्वसम्पादनात्तथात्वं यथोक्तम् “तत्र त्वां शतदृक् शक्रो मत्प्रादेशेन कर्म्मणा । अभिषेक्ष्य दिव्येन दैवतैः सह योक्ष्यति । तत्रैव त्वां भगिन्यर्थे ग्रहीष्यति स वासवः । कुशिकस्य तु गोत्रेण कौशिकी त्वं भविष्यसि” हरिव० ५८अ० योगमायां प्रति विष्णूक्तिः । “आर्या कात्यायनी देवी कौशिकी ब्रह्मचारिणी” भा० हरि० ५९अ० । पार्वत्याः शरीरकोष(षा)न्निःसृते १६दे-वीमूर्त्तिभेदे तस्य च सूर्द्धन्यषष्ठतापीति भेदः तन्मूलं देवीमाहात्म्यवाक्यं तच्च कोषशब्दे दर्शितं नाट्ये १७वृत्ति-भेदे अलङ्कारशब्दे लक्षणादिकं दृश्यम् [ तथात्वम्

**कौशिकप्रिय** पु० ६त० । श्रीरामे विश्वामित्रप्रियाचरणात्तस्य

**कौशिकफल** कौशिक कोशस्थं फलमस्य । नारिकेले शब्दरा०

**कौशिका** स्त्री कोश एव स्वार्थे क अतइत्त्वम् । पानपात्रे चषके हेम० [ शब्दमाला २विश्वामित्रपुत्रे च

**कौशिकात्मज** पु० ६त० । १इन्द्रपुत्रे जयन्ते २अर्जुने च

**कौशिकायनि** पु० कुशिकस्यापत्यम् वा० फिञ् । यजुर्वेद-वंशब्राह्मणस्थे ऋषिभेदे “कौशिकायनेः कौशिकायनिः” शत० ब्रा० १४।५।५।२१

**कौशिकायुध** न० ६त० । इन्द्रचापे शब्दरत्ना०

**कौशिकाराति** पु० ६त० । १काके राजनि० तस्य मेचकारातित्वं च तेन सह नित्यविरोधित्वात् । तत्कथा काकोलू-कशब्दे दृश्या कौशिकारिप्रभृतयोऽप्यत्र पु०

**कौशिकिन्** पु० ब० व० कौशिकेन प्रोक्तमधीयते णिनि । विश्वामित्रप्रोक्ताध्यायिषु

**कौशिकौज** पु० कौशिक्या इव ओजोऽस्य पृषो० सलोपः । शाखोटवृक्षे (सेओड़ा) राजनि०

कौशिज पु० ब० व० देशभेदे "पञ्चालाः कौशिजाश्चैव नैकपृष्ठाः धुरन्धराः" भा० भी० ९अ० जनपदकथने

कौशी(षी)धान्य न० कोश(ष)भवं कौशी(षी) कर्म्मधा०। कोश(ष)जाते धान्ये तिलादौ। "सर्व्वमेवैतदहः कौशी(षी)धान्यं विवर्ज्जयेत्" कात्या०श्रौ० २।१।१०

कौशे(षे)य न० कोशा(षा)दुद्धृतम् ढक्। कृमिकोषादिजाते वस्त्रे अमरः "निर्नाभि कौशे(षे)यमुपात्तरागम्" कुमा० "कौशेयं व्रजदपि गाढतामजस्रम्" माघः "लाक्षालोहितकौशे(षे)यपरिधानम्" काद० "कौषेयाविकयोरूषैः" मनुना तच्छोधनद्रव्यमुक्तम्

कौश्य त्रि० कुशस्येदम् ष्यञ्। १कुशसम्बन्धिनि शयनादौ "प्राक्कन्दच्छयने कौश्ये दृष्ट्वा गम्यमिव स्ववम्" भा० अनु०७१अ०। कुशस्य गोत्रापत्यं वा० ष्यञ्। २कुशगोत्रजे ऋषिभेदे पु० "तं होवाच सुचवाः कौश्यः" शत०ब्रा० १०।५।५।४ "कौश्यः कुशगोत्रजः" भा०। तेन ब्राह्मणे कोषय इति मूर्द्धन्यमुक्तपाठस्तु प्रामादिकः।

कौशा(सा)रव पु० कुशा(षा)रोरपत्यम् ऋष्यण्। कुशा(षा)रोर्मुनेरपत्ये मैत्रेये "यावतः कृतवान् प्रश्नान् क्षत्ता कौशारवाग्रतः" भाग०१।१३।२ "कौशारवस्य मैत्रेयस्याग्रतः" श्रीधरः "ननु ते तत्त्वसंराध्य ऋषिः कौशारवोऽन्तिके" भाग० ३।४।२ बाह्वा० इञ्। कौशारविरप्यत्र "यत्र कौशारवेस्तस्य संवादोऽध्यात्मसंश्रितः" भाग०२।१०।५२

कौषिक त्रि० कौशिक+पृषो०। १कौशिकशब्दार्थे मेदि०२दुर्गामूर्त्तिभेदे स्त्री "शरीरकोषाद्यत्तस्याः पार्वत्याः निःसृताम्बिका। कौषिकीति समाख्याता ततोलोकेषु गीयते" देवीमा० "कायकोषान्निःसृता या कालिकावास्तु सैव!। सा कौषिकीति विख्याता चारुरूपा मनोहरा" कालिका० पु० ६०अ०

कौषीतक पु० कुषीतकस्यापत्यम् ऋष्यण्। कुषीतकर्षिपुत्रे बह्वृचां प्रत्यहं तर्पणीये ऋषिभेदे कहोडे "कहोडं कौषीतकमित्यादि" आश्व० गृ० ३।४।४।२२ ऋषितर्पणे। कुषीतकस्यापत्यम् इञ्। कौषीतकिरपि कहोडे ऋषौ "तद्धोवाच कहोडः कौषितकिः" शत०ब्रा० २।४।२।१। तत्सम्बन्धित्वात् कौषितकिब्राह्मणं कौषीतकी उपनिषच्च ऋग्वेदान्तर्गता।

कौषीतकिन् पु० ब० व०। कौषीतकेन प्रोक्तमधीयते णिनि। कौषीतकेन प्रोक्ताध्यायिषु। "सदस्यं सप्तदशं कौषीतकिनः समामनन्ति" आश्व०गृ०१।२२।५।

कौ(षी)तकी कुषीतकस्यापत्यम् ऋष्यण् ङीप्। अगस्त्यपत्न्यां त्रिका०

कौषीतकेय पुंस्त्री कुषीतक+बा० अपत्ये ढक्। कुषीतकस्यापत्ये कहोडे "अथ हैनं कहोडः कौषीतकेयः पप्रच्छ" शत० ब्रा० १४।६।४।१।

कौष्ठविंतिक त्रि० कुष्ठविदि तद्विद्यायां साधु कल्वा० ठक् दस्य चरत्वेन तान्तत्वा ठस्य कादेशे। कुष्ठविद्यासाधौ। दस्य चर्त्वाभावमाश्रित्य तान्तत्वाभावेन कौष्ठविदिक इत्यन्ये तन्मतेनैव तद्रूपं २१५४पृ० उक्तम्

कौसीद्य न०कुत्सितं सीदत्यस्मिन् सीद+घा० आधारे घ स्वार्थे ष्यञ्। १आलस्ये २तन्द्रायाञ्च हेम०। कुसीदस्य भावः ष्यञ्। ३वृद्धिरूपकसीदवृत्तौ शब्दचि०

कौसुम न०कुसुमेन निर्वृत्तमण्। १पुष्पाञ्जने अमरः। तस्येदमण्। २पुष्पसम्बन्धिनि त्रि० "विनयति सुदृशो दृशोः परागं प्रणयिनि कौसुमसाननानिलेन" माघः

कौसुम्भ पु० कुसुम्भ+स्वार्थे अण्। १अरण्यकुसुम्भे २शाकभेदे राजनि०। कुसुम्भेन रक्तम् अण्। ३कुसुम्भरागरञ्जिते वस्त्रादौ त्रि०"कौसुम्भं पृथु कुचकुम्भसङ्गि वासः"माघः। तस्येदमण्। कुसुम्भसम्बन्धिनि त्रि० "दिनकरकरसङ्गव्यक्तकौसुम्भरागम्" माघः। उभयतः स्त्रियां ङीप्।

कौसुरुविन्द पु० दशरात्रसाध्ययागभेदे "कौसुरुविन्दः" कात्या०श्रौ०सू०२३।५।१५। "द्वितीयो दशरात्र एतत्संज्ञः" सं०व्या०।प्रायणीययागानन्तरं कौसुरुविन्दश्दशरात्रस्य२प्रथमेऽहनि च "कौसुरुविन्दः प्रथमन्त्र्यहः" कात्या० २४।३।१

कौसुरुविन्दि पु० कुसुरुविन्दस्यापत्यम् इञ्। तदपत्ये उद्दालकमुनौ "कौसुरुविन्दिरुद्दालक आरुणो ब्रह्मचर्य्यमुवास" शत० ब्रा० १२।२।२।१३। [ क्ते जटाश०

कौसृतिक त्रि० कुसृत्या चरति ठक्। मायाकारके शाठ्यसु-

कौस्तुभ पु० कौ भूमि स्तुभ्नाति कुस्तुभोजलधिः तत्र भवः अण्। विष्णोर्वक्षःस्थे 'कौस्तुभस्तु महातेजाः कोटिसूर्यसमप्रभः" इत्युक्तलक्षणे मणिभेदे। तस्य समुद्रादुत्पत्तिकथा हरिवं० २२अ०

"सुरासुरगणाः सर्वे सहिता अयवाप्सतः। मन्दरं पुष्करं कृत्वा नेत्रं वासुकिमेव च। ततः सहस्रं मथितं जलमोषधिभिः सह। क्षीरभूतं समायोगादमृतं समपद्यत! तज्जग्ध्वा सुराः पूर्वमाकाजा क्षोभमन्वयुना। तदा पश्चाच्च दुद्रुवाः कामतेजोबलान्विताः। धन्वन्तरिस्तथा मद्यं श्रीर्देवी कौस्तुभोमणिः। शशाङ्को विमलश्चापि समुतस्युः

समन्ततः"। "ततः शतसहस्रांशुर्मथ्यमानात्तु सागरात्। प्रसन्नात्मा समुत्पन्नः सोमः शीतांशुरुज्ज्वलः। श्रीरनन्तर मुत्पन्ना घृतात् पाण्डुरवासिनी। सुरा देवी समुत्पन्ना तुरगः पाण्डुरस्तथा। कौस्तुभस्तु मणिर्दिव्य उत्पन्नो घृतसम्भवः। मरीचिविकचः श्रीमान् नारायण उरोगतः" भा०आ०१८अ० "उच्चैःश्रवा हयश्रेष्ठो मणिरत्नञ्च कौस्तुभम्" रामा० उक्तेः क्षीरत्वमपि

"कौस्तुभाख्यमपांसारं बिभ्राणं वृहतोरसा" "सकौस्तुभं ह्रेपयतीव वक्षः" रघुः। २तैलभेदे न० "घृतार्थे गोघृतं ग्राह्यं तदभावे तु माहिषम्। आज्यं, वा तदभावे तु साक्षात्तैलं ग्रहीष्यते। तैलाभावे ग्रहीतव्यं तैलं जर्त्तिलसम्भवम्। तदभावेऽतसीस्नेहं कौस्तुभं सर्षपोद्भवम्। वृक्षस्नेहोऽथवा ग्राह्यः पूर्व्वाभावे परःपरः" कर्कधृतं मण्डनवाक्यम्। कौस्तुभमित्यत्र कौसुम्भमिति पाठस्तु सम्यक्। ३तन्त्रोक्ते मुद्राभेदे "अनामाङ्गुष्ठसंलग्ना दक्षिणस्य कनिष्ठिका। कनिष्ठयान्यया बद्धा तर्ज्जन्या दक्षया तथा। वामानामाञ्च बध्नीयात् दक्षिणाङ्गुष्ठमूलके। अङ्गुष्ठमध्यमे भूयः संयोज्य सरलाः पराः। चतस्रोऽप्यत्र संलग्ना मुद्रा कौस्तुभसंज्ञिका" तन्त्रसारः।

**कौस्तुभवक्षस्** पु० कौस्तुभो वक्षसि यस्य। विष्णौ हारा० कौस्तुभहृदयादयोऽप्यत्र पु०। एवं कौस्तुभलक्षणादयोऽप्यत्र।

**क्नथ** वधे वा० चु० उभ० पक्षे भ्वा० पर० सक० सेट् घटादि। क्नथयति-ते क्नथति अचिक्नथत्-त अक्नथीत्-अक्नाथीत्। क्नथयां-बभूव आस चकार—चक्नथ-चक्नाथ।

**क्नस** दीप्तौ कौटिल्ये च दिवा० पर० अक० सेट्। क्नस्यति अक्नसीत्-अक्नासीत् चक्नास। घटा० क्नसयति-ते। अचिक्नसत्-त उदित् क्नसित्वा-क्नस्त्वा।

**क्नस** दीप्तौ वा० चु० उभ० पक्षे भ्वा० अक० सेट् घटादि क्नसयति-ते। क्नसति। अचिक्नसत्-त अक्नसीत्-अक्नासीत् क्नसयां बभूव आस चकार चक्नसे चक्नास। उदित् क्नसित्वा-क्नस्त्वा। "क्नसु ह्वृतौ क्नस् कुसि कि च भासने कुस्य इश्लिषि" वोपदेवव्याख्याने "परोऽनुबन्धः पूर्वेषामेकवाक्यस्थत्वात्" इति तदुक्तिमाश्रित्य भ्रान्त्या दुर्गादासेन क्नस इदित्त्वमुक्तम् तच्चिन्त्यम्। पा० धातुपाठे चुरादिषु "वसिपिसि कुसि दंशि कुशीत्यादिना कुसेरेवेत्त्वमुक्तेः दिवादिषु च क्नसु ह्वरणदीप्त्योरित्युक्तेः घटादौ च जनीजृष क्नसु रञ्ज इति पाठाच्च इदित्क्नसधातोरदर्शनात्। अतः परानुबन्धस्य कोऽयस्येवात्र प्रवृत्तिः तेनास्य वा चुरादित्वम् अन्यथा कुसिवत् क्नसीत्येव मूलकृत् पठेत्। न च तथाऽपाठि क्व-तस्तस्य नेदित्त्वम्।

**क्नूय** दुर्गन्धे आर्द्रीभावे शब्दे च भ्वा० आत्म० अक० सेट्। क्नूयते अक्नूयिष्ट चुक्नूये। णिचि क्नोपयति ते। अस्य चेलार्थककर्म्मण्युपपदे णमुल् चेलक्नोपम् वस्त्रक्नोपम्। "यूनि गाढपरिरब्धिनि वस्त्रक्नोपमस्त्रु वहते मदनेन" माघः। 'वस्त्रं क्नोपयित्वा परिषिच्येत्यर्थः" मल्लि०। अभि+अभिव्याप्त्या आर्द्रीभावकरणे पूतीभावकरणे च सक० "आपो वै सर्वमन्नं ताभिर्हीदमभिक्नूयमिवादन्ति" शत० ब्रा० १४।१।१।१४। यान्तत्वात् ताच्छील्ये नातोयुच् किन्तु तृच्। क्नूयिता इत्येव।

**क्मर** कौटिल्ये भ्वा० पर० अक० सेट्। क्मरति अक्मा(क्म)-रीत् चक्मार।

**क्य** त्रि० कः प्रजापतिस्तस्मै हितः यत्। प्रजापतिहिते। "त्रेय चत्वारि क्यानां क्यानीति' प्रश्ने "एतान्येव चत्वारि क्यानां क्यानि" शत० ब्रा० १०।३।४।२।४। भा०तथार्थतोक्ता

**क्याम्बू** स्त्री क्यं प्रजापतिहितमम्बु यत्र ऊङ्। दूर्वाभेदे "क्याम्बूरत्ररोहतु शाण्डदूर्वा व्यल्कशा" ऋच०१८।३।६।

**क्रंश** प्रकाशने भ्वा० सक० सेट् क्रंशति अक्रंशीत् चक्रांश। "'क्रंशतेर्वा प्रकाशयतिकर्म्मणः। निरुक्तकारः २।२५।

**क्रकच** पु०क्र इति कचति शब्दायते कच-शब्दे अच्। १ग्रन्थि-लाख्ये वृक्षे मेदि०। २दारुदारणास्त्रे करपत्रे (करात) पु० न० अमरः। ज्योतिषोक्ते ३योगभेदे च। तल्लक्षणञ्च "षष्ठ्यादितिथयो मन्दात् विलोमं क्रकचः स्मृतः" इति "यथा शनौ षष्ठी, शुक्रे सप्तमी, गुरावष्टमी, बुधे नवमी, भौमे दशमी, सोमे एकादशी, रवौ द्वादशी, एते योगाः क्रकचाख्या ज्ञेयाः पीयू०धा०। यदाह नारदः "त्रयोदश स्युर्मिलने संख्ययोस्तिथिवारयोः" क्रकचो नाम योगोऽयं मङ्गलेष्वतिगर्हितः" [क्रकचदलादयोऽप्यत्र

**क्रकचच्छद** पु० क्रकच इव छदो यस्य। केतकीवृक्षे त्रिका०

**क्रकचपत्र** पु०क्रकच इव पत्रमस्य। १शाकवृक्षभेदे राजनि० २केतकीवृक्षे च।

**क्रकचपाद(द्)** पु० क्रकचमिव पादो यस्य वा अन्त्यलोपः। कृकलासे हारा० [वृक्षभेदे। त्रिका०।

**क्रकचपृष्ठी** स्त्री क्रकच इव पृष्ठं यस्याः ङीष्। (कइ) म-

**क्रकचव्यवहार** पु० लीलावत्युक्ते क्रकचच्छेद्यवस्तुनोवेतन ज्ञानार्थे तत्फलज्ञापके गणितभेदे यथा "क्रकचव्यवहारे करणसूत्रं वृत्तम्। पिण्डयोगदल-मग्रमूलयोर्दैर्घ्यसङ्गुणितमङ्गुलात्मकम्। दारुदारणपथैः

समाहृतं षट्खरैर्विहृतं करात्मकम् । उदाहरणम् । मूले नखा(२०)ङ्गुलमितोऽथ नृपा(१६)ङ्गुलोऽग्रे पिण्डः शताङ्गुलमिदं किल यस्य दैर्घ्यम् । तद्दारुदारणपथेषु चतुर्षु किं स्यादस्तात्मकं वद सखे ! गणितं द्रुतं मे । (तदाकारदर्शनाचित्रम्)




न्यासः

पिण्डयोगार्द्धदलं । १८ । दैर्घ्येण १०० सङ्गुणितं १८०० । दारुदारणपथैश्चतुर्भिर्गुणितं ७२०० । षट्खरैषु ५७६ विहृतं जातं करात्मकं गणितं २५/२ । क्रकचान्तरे करणस्थलं सार्द्धहस्तम् । छिद्यते तु यदि तिर्य्यगुक्तवत्पिण्डविस्तृतिहृतेः फलं तदा । इष्टिकाचितिदृषच्चितिखातक्राकचव्यवहृतौ खलु मूल्यम् । कर्म्मकारजनसम्प्रतिपत्त्या तन्मृदुत्वकठिनत्ववशेन । उदाहरणम् । यद्विस्तृतिर्द्दन्त ३२ मिताङ्गुलानि पिण्डस्तथा षोडश यत्र काष्ठे । छेदेषु तिर्य्यङ्नवसु प्रचक्ष्व किं स्यात् फलं तत्र करात्मकं मे ॥

न्यासः विस्तारः ३२ पिण्डः ।१६। पिण्डविस्तृतिहृतिः (तदाकारचित्रम् ।)




५१२ । दारुदारणमार्गैर्नवभिर्हृता ४६०८ । षट्खरैषु ५७६ विहृता जातं फलं हस्ताः । ८ ।"

**क्रकचा** स्त्री क्रकचस्येवाकारोऽस्त्यस्याः अर्श० अच् टाप् । कैतकीवृक्षे रत्नमा० ।

**क्रकण** पु० क्र इति कणति शब्दायते कण-अच् । (कयार) पक्षिभेदे अमरः स्त्रियां जातित्वात् ङीष् ।

**क्रकर** पु० क्र इति शब्दं कर्तुं शीलमस्य ताच्छील्ये ट ।

क्रकचे (कयार) १पक्षिविशेषे अमरः स्त्रियां ङीष् । २करीरवृक्षे ३करपत्रास्त्रे च पु० ४दीने त्रि० मेदि० "चोरयित्वा तु पत्रोर्णं क्रकरत्वं नियच्छति" भा० अनु० १११अ० । "चकोरकलविङ्कमयूरक्रकरोपाद्युपक्रमे "विष्करालघवः शीतमधुराः कषाया दोषशमनाः" इति सामान्यत उक्त्वा "वातपित्तहरा हृद्या मेधाग्निबलवर्द्धनाः । लघवः क्रकराः हृद्यास्तथा चैवोपचक्रकाः" सुश्रु० तन्मांसगुणा उक्ताः ।

**क्रतु** पु० कृ-कतु । १यूपवद्यज्ञे, सोमसाध्ये यज्ञे, २संकल्पे, ब्रह्मणोमानसे पुत्रे ३ऋषिभेदे, ४वैश्वदेवभेदे, ५इन्द्रियेषु च । ६विष्णौ तस्य सर्वयज्ञमयत्वेन सयूपयज्ञरूपत्वमपीष्टं यथाह "यज्ञइज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः" विष्णुस० । "सर्व्वयज्ञस्वरूपत्वात् यज्ञः यूपसहितोयज्ञः क्रतुरिति" भाष्यम् । तेन क्रतुशब्दस्य यूपसहितयज्ञबोधकता । अतएव तत्तद्यागे यूपविशेषाः शतपथब्राह्मणादौ उक्ताः । तत्र सोमसाध्ययागाश्च त्रय क्रतवः "त्रीन् क्रतूनन्वाहाग्नेयक्रतुमस्माश्विनम्" श्रुतौ "इत्यग्नेयः क्रतुः अग्निष्टोमः" "अथाश्विनः" आश्व०श्रौ० ४।११।८।१४।१।१५।१ सूत्रेषु दर्शिताः । अन्येऽपि क्रतवो वेदेषु दर्शितास्तत्तथा वगन्तव्याः । संकल्पश्च कामनाधीनः चित्तवृत्तिभेदः यथोक्तम् "कामः क्रतुः कर्म्म जन्मेत्येवमेषां क्रमोभवेत् । पुंसोया विषयापेक्षा स काम इति भण्यते । सएव वर्द्धमानश्चेत् क्रतुत्वं प्रतिपद्यते" । "रुचेरतिशयः काम्ये विषये क्रतुरीर्य्यते" इत्युक्ते ७रुचेराधिक्ये च । ८प्रज्ञायां निघ० । ९स्तवनादिकर्म्मणि च । "पुरुष्टुत ! क्रत्वा नः शग्धि" ऋ० ४।२१।१०। "क्रत्वा कर्म्मणा स्तुत्यादिहेतुना" भा० । क्रतुनामा मुनिश्च "ब्रह्मणोमानसाः पुत्रा विदिताः षण्महर्षयः । मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः" भा० आ०६५अ० उक्तः । "क्रतोरपि क्रियाभार्य्या वालिखिल्यानसूयत । ऋषीन् षष्टिसहस्राणि ज्वलतो ब्रह्मतेजसा" भाग० ४।१।२२। तद्वंशाद्युक्तम् "ससर्ज सृष्टिं तद्रूपां स्रष्टुमिच्छन् प्रजापतीन् मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् । वसिष्ठञ्च महातेजाः सोऽसृजत् सप्त मानसान्" हरिवं० १अ० । विश्वेदेवाश्च क्रमोदय यथा

"आत्मार्थे चासृजत् पुत्रान् लोककर्तॄन् पितामहः । विश्वे प्रजानां पतयो येभ्यो लोका विनिःसृताः । विश्वेशं प्रथमं नाम महातपसमात्मजम् । सर्व्वाश्रमपदं पुण्यं यस्यस्य

संमुकएव तत्र चेत्रे फलं कथय तत्कथितं यदाद्यैः

न्यासः




भूमिः । १४ । मुखम् । ६ । बाहू । १३ । १२ । लम्बः । १२ । उक्तवत्करणेन जातं चेत्रफलं करणी । १९८०० । अस्याः पदं किञ्चिन्न्यूनमेकचत्वारिंशदधिकशतम् १४१ । इदमत्र चेत्रे न वास्तवं फलम् किन्तु लम्बेन निघ्नं कुमुखैक्यखण्डमित्यादिवक्ष्यमाणकरणेन वास्तवं फलम् ।१२८

अत्र त्रिभुजस्य पूर्वोदाहृतस्य

न्यासः




भूमिः । १४ ।भुजौ । १३ । १५ । अनेनापि प्रकारेण त्रिबाहुके तदेव वास्तवं फलम् । ८४ । अत्र चतुर्भुजस्यास्पष्टत्वोदितम् ।

अथ स्थूलत्वनिरूपणार्थं सूत्रं सार्द्धवृत्तम् । चतुर्भुजस्यानियतौ हि कर्णौ कथं ततोऽस्मिन्नियतं फलं स्यात् । प्रसाधितौ तच्छ्रवणौ यदाद्यैः स्वकल्पितौ तावितरत्र न स्तः ॥ तेष्वेव बाहुष्वपरौ च कर्णावनेकधा चेत्रफलं ततश्च ॥ चतुर्भुजे हि एकान्तरकोणावाक्रम्याऽन्तःप्रवेश्यमानौ ससंसक्तं कर्णं सङ्कोचयतः इतरौ बहिरपसरन्तौ कोणौ सुसंसक्तं कर्णं वर्द्धयतः अतउक्तं तेष्वेव बाहुष्वपरौ च कर्णाविति । लम्बयोः कर्णयोर्वैकमनिर्दिश्यापरान् कथम् । पृच्छत्यनियतत्वेऽपि नियतञ्चापि तत्फलम् । स पृच्छकः पिशाचो वा वक्ता वा नितरान्ततः । यो न वेत्ति चतुर्बाहुक्षेत्रस्यानियतां स्थितिम् ॥ समचतुर्भुजाऽऽयतयोः फलानयने करणसूत्रं सार्द्धश्लोकद्वयम् । इष्टा श्रुतिस्तुल्यचतुर्भुजस्य कल्प्याऽथ तद्वर्गविवर्जिता या । चतुर्गुणा बाहुकृतिस्तदीयं मूलं द्वितीयश्रवणप्रमाणम् ॥ अतुल्यकर्णाभिहतिर्विभक्ता फलं स्फुटं तुल्यचतुर्भुजे स्यात् । समश्रुतौ तुल्यचतुर्भुजे च तथाऽऽयते तद्भुजकोटिघातः ॥ चतुर्भुजेऽन्यत्र समानलम्बे लम्बेन निघ्नं कुमुखैक्यखण्डम् ॥

उद्देशकः ! चेत्रस्य पञ्चकृतितुल्यचतुर्भुजस्य कर्णौ ततगणितं गणक ! प्रचक्ष्व । तुल्यश्रुतेश्च खलु तस्य तथा-

गतस्य यद्विस्तृतीरसमिताष्टमितं च दैर्घ्यम् ॥

प्रथमोदाहरणे ।

न्यासः




भुजाः ।२५।२५। ।२५ । २५ । अत्र त्रिंशन्मिता ।३० । मेकां श्रुतिं प्रकल्प्य जाताऽन्या । ४० । फलञ्च । ६०० । (तथाहि भुजवर्गः ६२५ । चतुर्गुणा २५०० श्रुतिवर्गेण ९००हीनात् १६०० मूलम् ४०) द्वितीयश्रुतिः । तयोः ३०।४०।त्र्योर्घातः १२०० द्विभक्त६०० ।

अथ वा ।

न्यासः




चतुर्दशमितामेकां ।१४। श्रुतिं प्रकल्प्योक्तवत्करणेन जाताऽन्या श्रुतिः । ४८ । फलञ्च । ३३६ ।

(अत्र चेत्रे २४अङ्कोऽशुद्धः १४शुद्धम् इति)

द्वितीयोदाहरणे ।

न्यासः




तत्कृत्योर्योगपदं कर्णंइति जाता करणीगता श्रुतिः

उभयत्र तुल्यैव । गणितञ्च । ६२५ ।

अथायतस्य ।




उदाहरणम् । क्षेत्रस्य यस्य वदनं मदनारितुल्यं विश्वम्भरा द्विगुणितेन मुखेन तुल्या । बाहू त्रयोदशनख-प्रमितौ च लम्बः सूर्यान्मितश्च गणितं वद तत्र किं स्यात् ॥ न्यासः




अत्र सर्वदोर्युतिदलमित्यादिना स्थूलं फलम् ।२५० वास्तवन्तु लम्बेन निघ्नं कुमुखैक्यखण्डमिति जातं फलम् ।१९८ । अत्रास्य खण्डत्रयं कृत्वा फलानि पृथगानीय ऐक्यं कृत्वास्य फलोपपत्तिर्दर्शनीया खण्डत्रयदर्शनम् ।




प्रथमस्य भुजकोटिकर्णाः । ५।१२ ।१३। द्वितीयतस्य-विस्तृतिः । ६ । दैर्घ्यं । १२। तृतीयस्य भुजकोटिकर्णाः ।१६ । १२ । २० ।

अत्र त्रिभुजयोर्भुजकोटिघाताद्धं फलम् यथा प्रथमक्षेत्रे फलम् । ३० । द्वितीये । ७२ । तृतीये ।९६। एषामैक्यं सर्वक्षेत्रफलम् । १९८ ।

अथान्यदुदाहरणम् । पञ्चाशदेकसहिता वदनं यदीयं भूः पञ्चसप्ततिमिता प्रमितोऽष्टषष्ट्या । सव्यो भुजाद्विगुण-विंशतिसम्मितोऽन्यस्तस्मिन् फलं श्रवणलम्बमिती प्रचक्ष्व

न्यासः




अत्र फलाथलम्बश्रुतीनां ज्ञानार्थं सूत्रं वृत्तार्द्धम् । ज्ञातेऽथ लम्बे श्रवणः श्रुतौ तु लम्बः फलं स्यान्नियतन्तु तत्र । कर्णस्यानियतत्वाल्लम्बोऽप्यनियतस्तथैव ।

लम्बज्ञानाय करणसूत्रं वृत्तार्द्धम् । चतुर्भुजान्तस्त्रिभुजेऽवलम्बः प्राग्वद्भुजौ कर्णभुजौ मही भूः ॥ अत्र लम्बज्ञानार्थं सव्यभुजाग्राद्दक्षिणभुजमूलगामी इष्टः कर्णः सप्तसप्ततिमितः कल्पितस्तेन चतुर्भुजान्तस्त्रिभुजं कल्पितं तत्रासौ कर्णएकोभुजः । ७७ । द्वितीयस्तु सव्यभुजः । ६८ । भूः सैव ।७५ । अत्र प्राग्वल्लब्धोलम्बः ३०८/५

लम्बे ज्ञाते कर्णज्ञानार्थं सूत्रं वृत्तम् । यल्लम्बलम्बाश्रितबाहुवर्गविश्लेषमूलं कथिताऽबधा सा । तदूनभूवर्गसमन्वितस्य यल्लम्बवर्गस्य पदं स कर्णः ॥

अत्र सव्यभुजाग्राल्लम्बः किल कल्पितः ३०८/५ तदूनभूवर्गसमन्वितेत्यादिना जातः कर्णः । ७७ ।

द्वितीयज्ञानार्थं सूत्रं वृत्तद्वयम । इष्टोऽत्र कर्णः प्रथमं प्रकल्प्यस्त्र्यस्त्रे तु कर्णोभयतः स्थिते ये । कर्णं तयोः क्ष्मामितरौ च बाहू प्रकल्प्य लम्बावयवे च साध्ये अबाधयोरेककुप्स्ययोर्यत्स्यादन्तरन्तत्कृतिसंयुतस्य । स-

स्वैक्यवर्गस्य पदं द्वितीयः कर्णो भवेत्सर्वचतुर्भुजेषु ॥

न्यासः



अत्र चतुर्भुजे सव्यभुजायाद्दक्षिणभुजमूलंगामिनः कर्णस्य मानं कल्पितम् । ७७ । तत्कर्णरेखावच्छिन्नस्य क्षेत्रस्य मध्ये कर्णरेखोभयतोये त्र्यस्रे उत्पन्ने तयोः कर्णां भूमिं तदितरौ च भुजौ प्रकल्प्य प्राग्वल्लम्बः आबाधा च साधिता। तद्यथा लम्बः ॥ ६० ॥ द्वितीय लम्बः ॥२४॥ आबाधयो । ४५ । ३२ । रेकककुप्स्ययो रन्तरस्य । १३ । कृते । १६९ । लम्बैक्य । ८४ । कृतेश्च ७०५६ योगः।७२२५।तस्य पदं ।८५। द्वितीयकर्णप्रमाणम्

अत्रेष्टकर्णकल्पने विशेषोक्तिसूत्रं सार्द्धवृत्तम् ।

कर्णाश्रितस्वल्पभुजैक्यसर्वी प्रकल्प्य तच्छेषभुजौ च बाहू । साध्योऽथलम्बोऽथ तथान्यकर्णः स्वोर्व्याः कथंचिच्छ्रवणोन दीर्घः ॥ तदन्यलम्बान्न लघुस्तथेदं ज्ञात्वेष्टकर्णः सुधिया प्रकल्प्यः ॥ चतुर्भुजं हि एकान्तरकोणयोराक्रम्य सङ्कोच्यमानं त्रिभुजत्वं याति तत्रैककोणे लग्नलघुभुजयोरैक्यं भूमिरितरौ भुजौ च तल्लम्बादूनः सङ्कोच्यमानः कर्णः कथञ्चिदपि न स्यात् तदितरोभूमेरधिकोन स्यादेवमुभयथापि एतदनुक्तमपि बुद्धिमता ज्ञायते ।

विषमचतुर्भुजफलानयनाय करणसूत्रं वृत्तार्द्धम् । तत्र क्षेत्रे तु कर्णोभयतः स्थिते ये तयोः फलैक्यं फलमत्र नूनम्। अनन्तरोक्तक्षेत्रान्तस्त्र्यस्रयोः फले ।९२४। २३१० । अनयोरैक्यं । ३२३४ । तस्य फलम् ।

समानलम्बस्याबाधादिज्ञानाय करणसूत्रं वृत्तद्वयम् । समानलम्बस्य चतुर्भुजस्य मुखोनभूमिं परिकल्प्य भूमिम् । भुजौ भुजौ त्र्यस्रवदेव साध्ये तस्याबधे लम्बमितिस्ततस्य ॥ अबाधयोना चतुरस्रभूमिस्तल्लम्बवर्गैक्यपदं श्रुतिः स्यात् । समानलम्बे लघुदोःकुयोगान्मुखान्यदोःसंयुतिरल्पिका स्यात् ॥

उदाहरणम् । द्विपञ्चाशन्मितव्येकचत्वारिंशन्मितौ भुजौ । मुखन्तु पञ्चविंशत्या तुल्यं षष्ट्या मही किल । ॥ अतुल्यलम्बकं क्षेत्रमिदं पूर्वमुदाहृतम् । षट्पञ्चाशच्चिषष्टिश्च नियते कर्णयोर्मिती ॥ कर्णौ तत्राऽपरौ ब्रूहि समलम्बञ्च तच्छ्रुती ॥

अत्र द्वितीय कर्णं त्रिषष्टिमितं प्रकल्प्यात जातः प्राग्वदन्यः कर्णः । ५६ ।




अथ षट्पञ्चाशत्स्थाने द्वात्रिंशन्मितं कर्णं । ३२ । प्रकल्प्य न्यासः




प्राग्वल्लाघवाने कर्णे जातं कर्णखण्डद्वयं । ६२१ । २७००। अनयोर्मूलयोः ७४ ५१ / २३ ०४ / २५ २५

रैक्यं द्वितीयः कर्णः ७२ / २२ / २५

न्यासः अथ तदेव क्षेत्रं समलम्बम् ।




तदा मुखोनभूमिं परिकल्प्य भूमिमिति ज्ञानार्थं त्र्यस्रङ्कल्पितं

(अत्र क्षेत्रे लम्बांशहारयोः षट्शते पतिते) न्यासः




अत्राबाधे जाते ३/५ १७२/५

लम्बश्च करणीगतोजातः ३८०१६ / २५

आसन्नमूलकरणेन जातः ३८ / ६२२ / ६२५

अयं तत्र चतुर्भुजे समलम्बः लम्बाऽऽबाधोनित-समभूमेर्लम्बस्य च वर्गयोगः । ५०४९ । अयं कर्णवर्गः एवं हृद्दाबाधातोद्वितीयकर्णवर्गः । २१७६ । अनयो-राद्यमूलकरणेन जातौ कर्णौ ७१/१/२०।४६१२/२० एवं चतुरस्रे तेनैव बाहुभ्यन्यौ कर्णौ बहुधा भवतः एवमनियतत्वेऽपि नियतावेव कर्णावानीतौ ब्रह्मगुप्ता द्यैस्तदानयनं यथा ।

कर्णाश्रितभुजघातैक्यमुभयथाऽन्योऽन्यभाजितं गुण-येत् । योगेन भुजप्रतिभुजवध्योः कर्णौ पदे विषमे




न्यासः

कर्णाश्रितभुजघातेति एकधारमनयो । २५ । ३९ घात । ९७५ । तथा । ५२ । ६० । ऽनयोर्घातः। ३१२० । तयोर्द्वयोरैक्यम् । ४०९५ । तथा द्वितीय वारम् । २५ । ५२ । अनयोर्घाते जातम् । १३०० । तथा द्वितीयवारम् । ३९ । ६० । अनयोर्घाते । २३४० । घातयोर्द्वयोरैक्यम् । ३६४० । भुजप्रतिभुज । ५२ । । ३९ । घात: । २०२८ । पश्चात् । २५ । ६० । अनयोर्बधः । १५०० । तयोरैक्यम् । ३५२८ । अनेनैक्येन । ३६४० । गुणितं जातं पूर्व्वैक्यम् । १२८४१९२० । प्रथमकर्णाश्रितभुजघातैक्येन । ४०९५ । भक्तं लब्धम् । ३१३६। अस्य मूलम् । ५६ । एकः कर्णः तथा द्वितीय कर्णार्थं प्रथमकर्णाश्रितभुजघातैक्यं । ४०९५ । भुज-प्रतिभुजवधयोगः ३५२८ गुणितं जातम् । १४४४७१६०। अन्यकर्णाश्रितघातैक्येन । ३६४०। भक्तं लब्धम् । ३९६९ । अस्य मूलं । ६३ । द्वितीयः कर्णः । अस्य कर्णानयनस्य प्रक्रियागौरवं लघुप्रक्रियादर्शन-द्वारेणाह । अभीष्टजात्यद्वयबाहुकोटयः परस्परं कर्ण-हताभुजादति । चतुर्भुजे यद्विषमं प्रकल्पितं श्रुती तु तत्र त्रिभुजद्वयात्ततः ॥ बाह्वोर्बधः कोटिवधेन युक् स्यादेका श्रुतिः कोटिभुजाह्वमैक्यम् । अन्या लघौ सत्यपि साधनेऽस्मिन् पूर्व्वैः कृतं यद्गुरु तन्न विद्मः ॥

जात्यक्षेत्रद्वयस्य

न्यासः




एतयोरितरेतरकर्णहताभुजाः कोटयः, इतरेतरकर्ण हताः कोटयोभुजाइति कृते जातं । २५ । ६० । ५२ । । ३९ । तेषां महती भूर्लघु सुखमितरौ बाहू इति प्र-कल्प्य क्षेत्रदर्शनं इमौ कर्णौ महतायासेनानीतौ । ६३ । ५६ । अस्यैव जात्यद्वयस्योत्तरोत्तरभुजकोट्यो र्घातौ जातौ । ३६ । २० । अनयोरैक्यमेकः कर्णः । ५६ । बाह्वोः । ३ । ५ । कोट्योश्च । ४ ।१२। घातौ । १५ । ४८ । अनयोरैक्यमन्यः । ६३ । एवं सुखेन श्रुती स्यातां अथ यदि पार्श्वभुजसुखयोर्व्यत्ययं कृत्वा न्यस्तं क्षेत्रम् न्यासः




तदा जात्यद्वयकर्ण-योर्वधः । ६५ । द्वि-यकर्णः ।

अथ सूचीक्षेत्रोदा-हरणम् । त्रे यत्र धनत्वयं । ३०० । क्षितिमितिस्त्वन्दु । १२५ । तुल्यं सुखं बाहु खोत्कृतिभिः । २६० । शरातिधृतिभि । १९५ । लुल्यौ च तत्र श्रुती । एका खाष्टयमैः । २८० । समा तिथिगुणै । ३१५ । रन्याऽथ तल्लम्बकौ तुल्यौ गोष्टतिभि । १८९ । स्तथाजिनयमै । २२४ । यौगाक्षबोलम्बयोः ॥ तत्खण्डे कथयाधरे श्रवणयोर्योगाच्च लम्बाबधे तत् सूची निजमार्गवृद्धभुजयोर्योगाद्यथा स्यात्ततः । साबाधं वद लम्बकञ्च भुजयोः सूच्याः प्रमाणे च के सर्व्वं गाणितिक ! प्रचण्ड नितरां क्षेत्रेऽत्र दक्षोऽसि चेत् ।

२५.२




सूच्यग्राबाधा १५२६/१७ सूच्यग्राबाधा ३५६४/१७
(अत्र चित्र १प्रथमपीठे २५२ इति शुद्धम् १५८इत्यशुद्धम्)

भूमानं ।२००। मुखं ।१२५। बाहू । २६०। १९५ ।
कर्णौ । २८० । ३१५ । लम्बौ । १८९ । २२४ ।

अथ सम्पाताद्यानयनाय करणसूत्रं वृत्तम् । लम्ब तदाश्रितबाह्वोर्मध्यं, सम्पाताख्यमस्य लम्बस्य । सम्पातो ना भूः पीठं साध्यं यस्याधरं खण्डम् ॥ सन्धिर्द्विस्थः परलम्बश्रवणहतः परस्य पीठेन । भक्तो लम्बश्रुत्योर्योगात्स्यातामधःखण्डे ॥

लम्बः । १८९ । तदाश्रितभुजः । १९५ । अनयोर्मध्ये यल्लम्बलम्बाश्रितबाहुवर्गेत्यादिनाऽऽगता ऽऽबाधा सन्धिसंज्ञा । ४८ । तदूनितभूरिति द्वितीया ऽऽबाधा सा पीठसंज्ञा । २५२ ।

एवं द्वितीयलम्बः । २२४ । तदाश्रितभुजः । २६० ।
पूर्ववत् सन्धिः ।१३२। पीठम् ।१६८ । खण्डं साध्यम् ।

अथाद्यलम्बस्य । १८९ अधःखण्डं साध्यम् ।
अस्य सन्धिः । ४८ । द्विःस्थः । ४८ । परलम्बेन । । २२४ । श्रवणेन च ।२८०। पृथग्गुणितः । १०७५२ । । १३४४० । परस्य पीठेन ।१६८ भक्तः ।

एवं द्वितीयलम्बस्य ॥ २२४ ॥ सन्धिः ॥ १३२ ॥ परलम्बेन १८९ ॥ कर्णेन च ३१५ पृथग्गुणितः परस्य पीठेन २५२ ॥ भक्तो लब्धं लम्बाधःखण्डम् ९९ श्रवणाधःखण्डञ्च १६५ ॥

अथ कर्णयोर्योगादधोलम्बज्ञानार्थं सूत्रं वृत्तम् । लम्ब भूघ्नौ निजनिजपीठविभक्तौ च वंशौ स्तः । ताभ्यां प्राग्वच्छ्रुत्योर्योगाल्लम्बः कुखण्डे च ॥

लम्बौ ॥१८९॥ २२४ ॥ भू २०० घ्नौ जातौ ५६७२०० ॥ स्वस्वपीठाभ्यां २५२, १६८ भक्तौ एवमत्र लब्धौ वंशौ ॥ २२५ ।४०० ॥ आभ्याम् अन्योऽन्यमूलाग्रगसूत्रयोगादित्यादिकरणेन लब्धः कर्णयोगादधोलम्बः । १४४ । भूखण्डे च । १०८ । १९२ ।

अथ सूच्याऽऽबाधालम्बभुजज्ञानार्थं सूत्रं वृत्तत्रयम् । लम्बहृतो निजसन्धिः परलम्बगुणः समाह्वयो ज्ञेयः । समपरसन्ध्योरैक्यं हारस्तेनोद्धृतौ तौ च ॥ सम परसन्धी भूघ्नौ सूच्याऽऽबाधे पृथक् स्याताम् । हारहृतः परलम्बः सूचीलम्बोद्धृतौ सूच्याः । एवं चेत्क्षोदः प्राज्ञैस्त्रैराशिकाज्ज्ञेयः ॥

अत्र किलायं लम्बः । २२४ । अस्य सन्धिः ।१३२ । अयं परलम्बेन । १८९ । गुणितो । २२४ । ऽनेन भक्तो जातः समाह्वयः८९१/८ । अस्य परसन्धिश्च ४८ । योगो हारः १२७५/८अनेन भू । २०० । घ्नः समः १७८२००/८ परसन्धि ९६००/१ च भक्तौ जाते सूच्यग्राऽऽबाधे ३५६४/१७।१५२६/१७ एवं द्वितीयलम्बस्य १८९ सन्धिः ४८परलम्बेन २२४गुणितः १०७५२स्वलम्बेन १८९भक्तः ) द्वितीयसमाह्वयः ५१२/९ (उक्तरीत्या) द्वितीयो हारः१७००/९अनेन२००भूघ्नःस्वीयःसमः१५३६००/९ परसन्धिश्च २६४००/१ भक्तौ जाते सूच्यग्राऽऽबाधे १५२६/१७ ३५६४/१७। परलम्बः । २२४ । भूमि ।२०० गुणो हारेण १७००/९भक्तो जातः सूचीलम्बः ६०४८/१७ सूचीलम्बेन भुजौ । १९५ । २६० । गुणितौ स्वस्वलम्बाभ्यां । १८९ । २२४ । यथाक्रमं भक्तौ जातौ सूमार्गवृद्धौ सूचीभुजौ ६२४०/१७ ७०२०/१७

एवमत्र सर्वत्र भागहारराशिं प्रमाणं गुणगुणकौ तु यथायोग्यं फलेच्छे प्रकल्प्य सुधिया त्रैराशिकमूह्यम् ॥

अथ वृत्तक्षेत्रे करणसूत्रं वृत्तम् । व्यासे भनन्दाग्नि । ३९२७ । हते विभक्ते खबाणसूर्यैः । १२५० । परिधिः स सूक्ष्मः । द्वाविंशतिघ्ने विहृतेऽथ शैलैः । ७ । स्थूलोऽथवा स्याद्व्यवहारयोग्यः ॥

उदाहरणम् । विष्कम्भमानं किल सप्त यत्र तत्र प्रमाणं परिधेः प्रचक्ष्व । द्वाविंशतिर्यत्परिधिप्रमाणं तद्व्याससंख्यां च सखे ! विचिन्त्य ॥




व्यासमानं । ७ ।
लब्धं परिधि मानं २१ १२३९/१२५०

स्थूलो वा परिधिर्लब्धः । २२ ।

अथवा परिधितो व्यासानयनाय न्यासः




गुणहारविपर्ययेण व्यासमानं लब्धं ७ ११/३९२७ स्थूलं वा । ७ ।

वृत्तगोलयोः फलानयने करणसूत्रं वृत्तम् । वृत्तक्षेत्रे परिधिगुणितव्यासपादः फलं यत् क्षुण्णं वेदैरुपरि परितः कन्दुकस्येव जालम् । गोलस्यैवं तदपि च फलं पृष्ठजं व्यासनिघ्नं षड्भिर्भक्तं भवति नियतं गोलगर्भे घनाख्यम् ॥

उदाहरणम् । यद्व्यासस्तुरगैर्मितः किल फलं क्षेत्रे समे तत्र किं व्यासः सप्तमितश्च यस्य सुमते ! गोलस्य तस्यापि किम् । पृष्ठे कन्दुकजालसंनिभफलं गोलस्य तस्यापि किं मध्ये ब्रूहि घनं फलञ्च विमलाञ्चेद्वेत्सि लीलावतीम् ॥

वृत्तक्षेत्रफलदर्शनाय न्यासः




व्यासः । ७ ।
परिधिः २१ १२३९/१२५०
क्षेत्रफलम् ३८ २४२३/५०००

गोलपृष्ठफलदर्शनाय न्यासः

व्यासः । ७ ।




गोलपृष्ठफलम् १५३ ११७३/१२५०

गोलान्तर्गतघनफलदर्शनाय न्यासः

व्यासः । ७ ।




गोलस्यान्तर्गतं घनफलम् १७९ १४८७/२५००

अथ प्रकारान्तरेण तत्फलानयने करणसूत्रं सार्द्धवृत्तम् । व्यासस्य वर्गे भनवाग्निनिघ्ने सूक्ष्मं फलं पञ्चसहस्रभक्ते । रुद्राहृते शक्रहृतेऽथ वा स्यात् स्थूलं फलं तद्व्यवहारयोग्यम् ॥ घनीकृतव्यासदलं निजैकविंशांशयुग्गोलघनं फलं स्यात् ॥

व्यासः । ७ । अस्य वर्गः । ४९ । भनवाग्निनिघ्ने पञ्चसहस्रभक्ते तदेव सूक्ष्मं फलम् ३८ २४२३/५०००

अथवा व्यासस्य वर्गे । ४९ । इन्द्राहते ११ । ५३९ ।
षडभिर्हृते १४लब्धं स्थूलं फलम् ३८

१

२

घनीकृतव्यासदलं३४३/२

निजैकविंशांशयुक् गोलस्य घनफलं स्थूलं १७९

२

२

शरजीवानयनाय करणसूत्रं शार्दूलवृत्तम् । ज्याव्यासयोगान्तरघातमूलं व्यासस्तदूनोदलितः शरः स्यात् । व्यासाच्छरोनाच्छरसङ्गुणाच्च मूलं द्विनिघ्नं भवतीह जीवा । जीवार्द्धवर्गे शरभक्तयुक्ते व्यासप्रमाणं प्रवदन्ति वृत्ते ॥

उदाहरणम् । दशविस्तृतिवृत्तान्तर्यत्र ज्या षण्मिता सखे ! । तत्रेषुं वद बाणाज्ज्यां ज्यवावाणाभ्यां च विस्तृतिम् ॥ १८० ॥ न्यासः




व्यासः ।१०। ज्या ।६।योग ।१६। अन्तरं । ४ । घातः । ६४ । मूलम् । ८ । एतः दूनो व्यासः । २ । एतद्दलितः । १ । जातः शरः ।१।

व्यासात् । १० । शरोनात् । ९ । शर । १ । सङ्गुणात् । ९ ।

मूलम् । ३ । द्विनिघ्नं जाता जीवा । ६ ।

एवं ज्ञाताभ्यां ज्यावाणाभ्यां व्यासानयनं यथा जीवा ।६। र्द्ध ।३। वर्गे । ९ । शर । १ । भक्ते ।९। शर ।१। युक्ते जातो व्यासः । १० ।

अथ वृत्तान्तस्त्र्यस्रादिनवास्रान्तक्षेत्राणां भुजमानानयनाय करणसूत्रं वृत्तत्रयम् । त्रिद्व्यङ्काग्निनभश्चन्द्रैः १०३९२३ । स्त्रिबाणाष्टयुगाष्टभिः । ८४८५३ । वेदाग्निबाणखाश्वैश्च । ७०५३४ । खखाभ्राभ्ररसैः । ६०००० । क्रमात् ॥ बाणेषुनखबाणैश्च । ५,२०५५ । द्विद्विनन्देषुसागरैः । ४५९२२ । कुरामदशवेदैश्च ४१०३१। वृत्तव्यासे समाहते ॥ खखखाभ्रार्क ( १२००००। सम्भक्ते लभ्यन्ते क्रमशोभुजाः । वृत्तान्तस्त्र्यस्रपूर्वाणां नवास्रान्तं पृथक् पृथक् ॥

उदाहरणम् । सहस्रद्वितयव्यासं यद्वृत्तं तस्य मध्यतः।

समत्र्यस्रादिकानां मे भुजान्वद पृथक् पृथक् ॥

अथ वृत्तान्तस्त्रिभुजे भुजमानानयनाय न्यासः




व्यासः ॥ २०००॥ त्रिद्व्यङ्काग्निनभश्चन्द्रैः। १०३९२३। गुणितः । २०७८४६०००खखखाभ्रार्कैः । १२०००० । र्भक्ते लब्धं त्र्यस्रे भुजमानम् १७३२

१

२०।

वृत्तान्तश्चतुर्भुजे भुजमानानयनाय

न्यासः




व्यासः । २००० । त्रिबाणाष्टयुगाष्टभि । ८४८५३ । गुणितः । १६९७०६००० । खखखाभ्रार्कैः । १२००००.र्भक्ते लब्धं चतुरस्रे भुजमानम् १४१४

१३

६०

वृत्तान्तःपञ्चभुजे भुजमानानयनाय

न्यासः




व्यासः।२०००। वेदाग्निबाणखाश्वैः । ७०५३४गुणितः ॥१४१०६८०००॥

खखखाभ्रार्कैः १२०००० र्भक्ते लब्धं पञ्चास्रे भुजमानम् ११७५

१७

२०

वृत्तान्तःषड्भुजे भुजमानानयनाय न्यासः




व्यासः २०००
खखखाभ्राभ्रर-
सै ६०००० गुणित-
तः १२००००००
खखखखाभ्राकैः
१२००००
उक्तं लब्धं षडस्रे
भजमानम् ।१०००

वृत्तान्तःसप्तभुजमानानयनाय न्यासः



व्यासः २०००
वाणेषुनयाणै
५२०५५ गुणितः
॥ १०४११०००० 
खखखाभ्राकैः
१२०००० भक्ते
लब्धं सप्तास्रे
भुजमानम् ८६७
११
२०

वृत्तान्तरष्टभुजे भुजमानानयनाय न्यासः



व्यासः २०००
द्विद्विनन्देषुसागरै
४५६२२ गुणितः
॥९१८४४००० ॥ ख०
खखाभ्राकैः १२०००
भक्ते लब्धमष्टास्रे
भुजमानम् ७६५
११
२०

वृत्तान्तर्नवभुजे भुजमानानयनाय न्यासः



व्यासः २०००
कुरामदस्रवेदै
।४१०२११गुणितः
८२०६२०००।
खखाभ्राकैः
।१२००००भक्ते
लब्धं नवास्रे
भुजमानम् ६८३
११
२०

एवमिष्टव्यासादेभ्योऽन्यास्रपि जीवाः सिध्यन्तीति तास्तु गोले ज्योत्पत्तौ वक्ष्ये ।

अथ स्थूलजीवाज्ञानार्थं लघुक्रियया करणसूत्रं वृत्तम्

चापोननिघ्नपरिधिः प्रथमाह्वयः स्यात्पञ्चाहतः परिधिवर्ग चतुर्थभागः । आद्योनितेन खलु तेन भजेच्चतुर्घ्नव्यासाहतं प्रथममाप्तमिह ज्यका स्यात् ।

उदाहरणम् । अष्टादशांशेन वृतेः समानमेकादिनिघ्नेन च यत्र चापम् । पृथक् पृथक्तत्र वदाशु जीवां खार्कैर्मितं व्यासदलञ्च यत्र । न्यासः




(अत्रचित्रे ४जीवामानं २२४ इत्यशुद्धम् १५४ इतिशुद्धम्)

व्यासः ॥२४० ॥ अत्र किलाङ्कलाघवाय विंशतेः सार्द्धर्कि षतांशमिलितः सूक्ष्मपरिधिः ७५४ अस्याष्टादशांशः ४२ अत्रायङ्कलाघवाय द्वयोरष्टादशांशयुतोऽष्ट-

हीतः। अनेन पृथक् पृथगेकादिगुणितेन तुल्ये धनुषि कल्पिते ज्याः साध्याः।

अथवाऽत्र सुखार्थं परिधेरष्टादशांशेन परिधिं धनूंषि चापवर्त्त्य ज्याः साध्यास्तथाऽपि ता एव भवन्ति। अपवर्त्तिते व्यासः परिधिः १८ चापानि च ।१।२।३।४।५।६।७।८।९। यथोक्तकरणेन लब्धाजीवाः ।४२।८२।१२०।१५४।१८४।२०८।२२६।२३६।२४०।

अथ चापानयनाय करणसूत्रं वृत्तम्। व्यासाब्धिघातयुतमौर्व्विकया विभक्तोजीवाङ्घ्रिपञ्चगुणितः परिधेस्तु वर्गः। लब्धोनितात्परिधिवर्गचतुर्थभागादाप्ते पदे वृतिदलात्पतिते धनुः स्यात्॥

उदाहरणम्। विहितादृह ये गुणास्ततोऽवद तेषामधुना धनुर्मितिम्। यदि तेऽस्ति धनुर्गुणक्रियागणिते गाणितिकातिनैपुणम्॥

व्यासः।४२।८२।१२०।१५४।१८४।२०८।२२६।२३६।२४०। सएवापवर्त्तितपरिधिः ।१८ जीवाङ्घ्रिणा २१/२ पञ्चभि।५। स्व परिधे।१८। र्वर्गो ३२४ गुणितः।१७०१०। व्यास।२४०। ब्धि।४। घात।९६०। युतमौर्विकयानया।१००२। विभक्तोलब्धो।१७। ऽत्राल्पत्वादवयवाः चतुर्विंशतेस्त्र्यधिकसहस्रांशयुतोऽगृहीतोऽनेनोनितात्परिधि।१८। वर्ग।३२४। चतुर्थभागात्।६४। पदे प्राप्ते।८। वृति।१८। दलात्।९। पतिते।१। जातं धनुः। एवं जातानि धनूंषि।१।२।३।४।५।६।७।८।९। एतानि परिधिव्यष्टादशांशेन गुणितानि स्युः”

तत्र लीलावतीप्रदर्शितप्रथमक्षेत्रे कर्णस्य भुजकोटिवर्गयोगमूलात्मकत्वं यदुक्तं तत्रोपपत्तिः प्रदर्श्यते। समचतुर्भुजे हि क्षेत्रे “समश्रुतौ तुल्यचतुर्भुजे च तथायते तद्भुजकोटिघातः” इत्यनेन चतुर्हस्तमितभुजस्य कोटित्वेन कल्पितस्य इतरतथाविधभुजेन गुणिते १६ हस्तमितं क्षेत्रफलम् अतस्तद्भुजस्य क्षेत्रफलस्य १६ हस्तस्य मूलं ४ हस्तात्मको भुजः। एवं त्रिहस्तमितकोटिभुजरूपतया कल्पनेन समचतुर्भुजक्षेत्रकरणे उक्तरीत्या तत्फलं ९ हस्ताः क्षेत्रफलं कोटिरूपभुजस्य तन्मूल ३ हस्तरूपता। अनयोर्योगः २५ हस्ताः, यस्य च क्षेत्रस्य कर्णरूपभुजत्वेन कल्पने समचतुर्भुजकरणे पूर्वोक्तं २५ हस्तमितफलं तुल्यं भवति तादृशसमचतुर्भुजे क्षेत्रे २५ अङ्कस्य मूलरूपा कर्णमितिः। तथाहि पञ्चहस्तमितसमचतुर्भुजक्षेत्रे भुजकोटिरूपचतुर्भुजत्वेन कल्पनेन समचतुर्भुजक्षेत्रफलयोः १६,९, हस्तात्मकयोः समावेशः इत्यतः भुजकोटिवर्गयोगमूलरूपता कर्णस्य युक्ता। एवमन्यत्रापि उपपाद्यमिति बहवः।

अन्यथाप्यत्रोपपत्तिः प्रदर्श्यते भुजं कोटिं कर्णञ्च व्यासस्थानीयं कृत्वा वृत्तार्द्धक्षेत्रकरणे तत्र भुजव्यासक क्षेत्रस्य “व्यासस्य वर्गे भनवाग्निनिघ्ने सूक्ष्मं फलं पञ्चसहस्रभक्ते। रुद्राहते शक्रहृतेऽथ वा स्यात् स्थूलं फलमिति” रीत्या भुज ४ रूपव्यासस्य वर्गे १६ रुद्र ११ गुणिते १७६। शक्र १४ हृते १७६/१४ स्थूलं फलं तदर्द्धं १७६/२८, वृत्तक्षेत्रार्द्धस्य स्थूलं फलम्। एवं कोटिरूप ३ व्यासवर्गः ९। ११ गुणितः ९९। शक्र १४ भक्तः, ९९/१४ तदर्द्धं ९९/२८ तस्य क्षेत्रफलम् अनयोर्योगः २७५/२८ इदं कर्णव्यासकवृत्तक्षेत्रार्द्धफलतुल्यम् तादृशफलेन कर्णमानानयनञ्च गुणहारादिव्यत्ययेन कार्य्यं यथा २७५/२८ शक्र १४ गुणितः २७५/२ रुद्र ११ भक्तः २५/२ एतच्च तत्क्षेत्रफलं तच्च द्विगुणितं २५ तस्य मूलं ५ कर्णः। एवं सूक्ष्मफलं तु भुजकोटिकर्णव्यासके वृत्तक्षेत्रे व्यासस्य वर्गे भनवाग्नि ३९२७ गुणिते ५००० भक्ते भवति तत्रोक्तरीत्या भुजकोटिव्यासकक्षेत्रे फलयोगतुल्यता कर्णव्यासकवृत्तक्षेत्रफलस्येति कल्प्यम्। अयमेव पन्थः भास्कराचार्य्यस्याभिमतः कर्णस्य भुजकोटिवर्गयोगमूलात्मकत्वेन तेनाभिधानात् यथानिर्दिष्टवृत्तक्षेत्रफलस्य व्यासवर्गघटितत्वेन तेनाभिधानाच्च। अतस्तथा प्रत्यभिज्ञायते इत्यस्माभिः नवीनः उपपत्तिपथ उद्भावितः।

वृत्तान्तर्गतसमत्रिकोणानां ये भुजा उक्तास्तेषां तथा मानत्वे उपपत्तिर्दर्श्यते। तत्र क्रमज्याशब्दे २३०३पृ० सिद्धान्तोक्ताः २४कर्द्धजीवा दर्शिताः। तत्र चक्रकला २१६०० तुल्यः परिधिः। ताश्च कलाः “व्यासे भनन्दाग्नि-३९२७ हते विभक्ते खबाणसूर्य्यैः १२५० परिधिः स सूक्ष्मः” इत्युक्तरीत्या वैपरीत्येन खबाणसूर्य्य १२५० हताः २७००००००। भनवाग्नि ३९२७ भक्ताः। ६८७६ व्यासस्तदर्द्धं ३४३८ इयमन्तिमज्या त्रिज्येति चोच्यते। तत्रानुपातार्थं चक्रकलातुल्य २१६०० परिधिवृत्तस्यान्तःस्थत्रिकोणादीनां क्रमेण भुजाः साध्यन्ते। तत्र चक्रकलानां २१६०० क्रमेण त्रिचतुरादिभिर्भक्तानामर्द्धानि क्रमेण चापार्द्धानि स्युः। तानि च ३६००।२७००।२१६०।१८००।१५४३।१३५०।१२००। क्रमेण एतत्कलामितानि। ‘तत्त्वाश्विभक्ताश्च सवः कला वा यत्तत्त्वसंख्या

गतशिञ्जिनी. सा। गतैष्यजीवान्तरशेषघातात् तत्त्वाश्वि-लब्ध्या सहितेषिसता स्यात्” इत्युक्तरीत्या ताः कलाः क्रमेण तत्त्वाश्वि २२५ भक्ताः क्रमेण त्र्यस्रे १६चतु-रस्रे।१२पञ्चास्रे ८।१२५। शेषः षड़स्रे ८।सप्तास्रे ६।१९३। शेषः अष्टास्रे ६। नवास्रे ५।७५ शेषः तथाच त्रिकोणे क्रमज्यासु पठिता षोड़शी २९७७। अर्द्धजीवा। चतुरस्रे तत्रोक्ता द्वादशी २४३१ पञ्चकोणे तत्रोक्ता नवमी १९१० गता एष्या दशमी २०९३। तयोरन्तरं १८३। शेषकला १३५ तयोर्घातः २४७०५ तत्त्वाश्वि २२५भक्ते लब्धिः११० अनया सहिता गतजीवा।२०२०। इयं अर्द्धजीवा। षड़स्रे तत्रोक्ता अष्टमी १७१९। सप्तास्रे षष्ठी जीवा १३१५ गता। एष्या १५२० तयो-रन्तरं २०५। शेषकलाः १९३ अनयोर्घातः ३९५६५। तत्त्वाश्विभक्ते १७५ लब्धिः अनया युक्ता गतजीवा १४९० इयं सप्तास्रे अर्द्धजीवा। अष्टास्रे षष्ठी १३१५। नवास्रे पञ्चमी ११०५ गता एष्या १३१५तयोन्तरं २१० शेषकला ७५। तयोर्घातः २२५० तत्त्वाश्विभक्तः लब्धिः १० अनया सहिता गतजीवा ११०५। १११५ नवास्रे अर्द्धजीवा। एताद्विगुणाः क्रमेण चक्रकला२१६०० तुल्य परिधिकवृत्ते समत्र्यस्रादीनां भुजाः यथा ५९५४।४८६२ ।४०४०।३४३८।२९८०।२६३०।२२३०। क्रमेणं भुजाः। यदि चक्रकलापरिधिव्यासार्द्धे ३४३८। क्रमेण एते भुजाः तदा फलेच्छयोः समानजातीयत्वकरणेन षष्टिगुणित-प्रकृतव्यासार्द्धे क इत्यनुपाते फलं द्विगुणितं किञ्चिन्यूना-धिका षष्टिगुणिते१२००००व्यासे त्रिद्व्यङ्काग्निनभश्चन्द्रादयः क्रमेणाङ्काः लब्धाः। यदि खखखार्क १२०००० व्यासवृत्ते एते १०३९२३ ९४८५३।७०५३४५।६००००।५२०५५।४५९२२। ४१०३१। क्रमेण भुजाः तदा इष्टव्यास २००० वृत्ते के इत्यनुपातेन उक्तानि फलानि भुजमानानि स्युरिति

अत्र वृत्तान्तर्गतं त्रिकोणञ्च समत्रिकोणं तत्र सर्वेषां भुजानां तुल्यत्वात्। तथाहि परिधितृतीयांश रूपाणां सर्व्वचापांशानां तुल्यतया तत्र्यचापांशेषु जीवास्थानीयभुजानां तुल्यत्वौचित्यात्।

अन्यान्यक्षेत्रेषूपपत्तिर्लीलावतीटीकायां दर्शिता विस्तर-भयान्नोल्लिखिता।

९ स्थानमात्रे “धर्म्मक्षेत्रे कुरुक्षेत्रे”गीता। तत्र केदारे “यादृशं लुप्यते वीजं क्षेत्रे कालोपपादिते” येऽक्षेत्रिणो वीजवन्तः परक्षेत्रे प्रवापिणः” मनुः

कलत्रे “अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः”याज्ञ० देहे “इदं शरीरं कौन्तेय! क्षेत्रमित्यभिधीयते”गीता। क्षेत्रज्ञः ‘क्षत्रक्षेत्रज्ञयोरेवम्”। “गीता क्षेत्रेष्वेवमजोऽय-मात्मा” स्मृतिः तीर्थस्थाने “प्रविशन्तस्तु तत्क्षेत्रं सर्वे स्यु विष्णुमूर्त्तयः”। उत्कलख०। क्षेत्रं विद्यतेऽस्य इनि क्षेत्रिन्, ठन् क्षेत्रिक क्षेत्रस्वामिनि त्रि० “फलं त्वनभिसन्धाय क्षत्राणां वीजिनां तथा” कुर्व्वन्ति क्षेत्रिणोयद्दद्” प्रत्यक्षं क्षेत्रिकस्यार्थः” “क्षेत्रिकस्यैव तद्वीजम्” मनुः। एतस्मि-न्नुपपदे कर्म्मभूते कर्त्तरि कञः टः। क्षेत्रकर क्षेत्रकारिणि त्रि० स्त्रियां ङीप्। [राजनि०

**क्षेत्रकर्कटी** स्त्री क्षेत्रजाता कर्कटी। वालुक्यां कर्कटीभेदे

**क्षेत्रचिर्भिटा** स्त्री क्षेत्रजाता चिर्भिटा। पाण्डुफलायां चिर्भिटाभेदे राजनि०

**क्षेत्रज** पु० क्षेत्रे जायते जन-ड ७त०। “यस्तल्पजः प्रमीतस्य क्लीवस्य व्याधितस्य च। स्वधर्म्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः”: इति मनूक्ते १पुत्रभेदे नियोगधर्म्मश्च मनुनोक्त्वा निषिध्य च वाग्दानोत्तरमेव पतिमरणे विहितः यथा

“देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया। प्रजेप्सिताऽधिगन्तव्या सन्तानस्य परिक्षये। विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि। एकमुत्पादयेत् पुत्त्रं न द्वितीयं कथञ्चन। द्वितीयमेके प्रजनं मन्यन्ते स्त्रीषु तद्विदः। अनिर्व्वृत्तं नियोगार्थं पश्यन्तो धर्म्मतस्तयोः। विधवायां नियोगार्थे निर्वृत्ते तु यथा-विधि। गुरुवच्च स्नुषावच्च वर्त्तेयातां परस्परम्। नि-युक्तौ यौ विधिं हित्वा वर्त्तेयातान्तु कामतः। तावुभौ पतितौ स्यातां स्नुषागगुरुतल्पगौ। नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः। अन्यस्मिन् हि नियुञ्जाना धर्म्मं हन्युः सनातनम्। नोद्वाहिकेषु म-न्त्रेषु नियोगः कीर्त्त्यते क्वचित्। न विवाहविधावुक्तं विधवावेदनं पुनः। अयं द्विजैर्हि विद्वद्भिः पशुधर्म्मो विगर्हितः। मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशा-सति। स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा। वर्णानां सङ्करं चक्रे कामोपहतचेतनः। ततः प्रभृति

यो मोहात् प्रमीतपतिकां स्त्रियम् । नियोजयत्यपत्यार्थं तं विगर्हन्ति साधवः । यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विन्देत देवरः । यथाविध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् । मिथो भजेताप्रसवात् सकृत् सकृदृतावृतौ" ।

बृहस्पतिना "उक्तो नियोगो मनुना निषिद्धः स्वयमेव हि" इत्यादिना तन्निषेध उक्तः । मिताक्षरायामप्ययं पक्षो द्व्यामुष्यायणप्रसङ्गे समर्थितः यथा

"अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः । उभयोरप्यसौ रिक्थी पिण्डदाता च धर्म्मतः" या० । "अपुत्रो गुर्वनुज्ञातः" इत्याद्युक्तविधिना अपुत्रेण देवरादिना परक्षेत्रे परभार्य्यायां गुरु नियोगेनोत्पादितः पुत्र उभयोर्वीजक्षेत्रिणोरसौ रिक्थी रिक्थहारी पिण्डदाता च धर्म्मत इत्यस्यायमर्थः । यदाऽसौ नियुक्तो देवरादिः स्वयमप्यपुत्रोऽपुत्रस्य क्षेत्रे स्वपरपुत्रार्थं प्रवृत्तोऽयं जनयति स द्विपितृको द्व्यामुष्यायणो द्वयोरपि रिक्थहारी पिण्डदाता च । यदा तु नियुक्तः पुत्रवान् केवलं क्षेत्रिणः पुत्रार्थं यतते तदा तदुत्पन्नः क्षेत्रिण एव पुत्रो भवति न वीजिनः । स च नियमेन वीजिनो रिक्थहारी पिण्डदोऽपीति । यथोक्तं मनुना "क्रियाभ्युपगमात् क्षेत्रं वीजार्थं यत् प्रदीयते । तस्येह भागिनौ दृष्टौ वीजी क्षेत्रिक एव चेति" । क्रियाभ्युपगमादिति अत्रोत्पन्नमपत्यमावयोरुभयोरपि भवत्विति संविदङ्गीकरणाद्यत् क्षेत्रं क्षेत्रस्वामिना वीजिने वीजवपनार्थं दीयते तस्मिन् क्षेत्र उत्पन्नस्यापत्यस्य वीजक्षेत्रिणौ भागिनौ दृष्टौ महर्षिभिः । तथा । "फलं त्वनभिसन्धाय क्षेत्रिणां वीजिनां तथा । प्रत्यक्षं क्षेत्रिणामर्थो वीजाद्योनिर्वलीयसीति" मनुः । "फलं त्वनभिसन्धायेति अत्रोत्पन्नमपत्यमावयोरुभयोरस्त्वित्येवमनभिसन्धाय परक्षेत्रे यदपत्यमुत्पाद्यते तदपत्यं क्षेत्रिण एव । यतो वीजाद्योनिर्वलीयसी गवाश्वादिषु तथादर्शनात् । अत्रापि नियोगो वाग्दत्ताविषय एव इतरस्य नियोगस्य मनुना निषिद्धत्वात् "देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया । प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये । विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि । एकमुत्पादयेत्पुत्रं न द्वितीयं कथञ्चन" इत्येवं नियोगमुपन्यस्य मनुः स्वयमेव निषेधति । "नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः । अन्यस्मिन् हि नियुञ्जाना धर्म्मं हन्युः सनातनम् । नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्त्यते क्वचित् । न विवाहविधावुक्तं विधवावेदनं पुनः । एवं द्विजैर्हि विद्वद्भिः पशुधर्म्मो विगर्हितः । मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति । स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा । वर्णानां सङ्करञ्चक्रे कामोपहतचेतनः । ततः प्रभृति यो मोहात् प्रमीतपतिकां स्त्रियम् । नियोजयत्यपत्यार्थे गर्हन्ते तं हि साधवः" इति । न च विहितप्रतिषिद्धत्वाद्विकल्प इति मन्तव्यम् नियोक्तॄणां निन्दाश्रवणात् । स्त्रीधर्म्मेषु व्यभिचारस्य बहुदोषश्रवणात् संयमस्य प्रशस्तत्वाच्च । यथाह मनुरेव "कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः । न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य त्विति" जीवनार्थं पुरुषान्तराश्रयणं प्रतिषिध्य "आसीतामरणात् क्षान्ता नियता ब्रह्मचारिणी । यो धर्म्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् । अनेकानि सहस्राणि कौमारब्रह्मचारिणाम् । दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम् । मृते भर्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता । स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः । अपत्यलोभाद्या तु स्त्री भर्तारमतिवर्तते । सेह निन्दामवाप्नोति परलोकाच्च हीयते" इति पुत्रार्थमपि पुरुषान्तराश्रयणं निषेधति । तस्माद्विहितप्रतिषिद्धत्वाद्विकल्प इति न युक्तम् । एवं विवाहसंस्कृतानियोगे प्रतिषिद्धे कस्तर्हि धर्म्यो नियोग इत्यत आह "यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विन्देत देवरः । यथाविध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् । मिथो भजेताप्रसवात् सकृत् सकृदृतावृताविति" । यस्मै वाग्दत्ता कन्या स प्रतिग्रहमन्तरेणैव तस्याः पतिरित्यस्मादेव गम्यते । तस्मिन् प्रेते देवरस्तस्य ज्येष्ठः कनिष्ठो वा निजः सोदरो विन्देत परिणयेत् । यथाविधि यथाशास्त्रमधिगम्य परिणीयानेन विधानेन घृताभ्यङ्गवाङ्नियमादिना । शुक्लवस्त्रां शुचिव्रतां मनोवाक्कायसंयमां मिथो रहस्यागर्भग्रहणात् प्रत्यृतु एकैकं वारं गच्छेत् । अयञ्च विवाहो वाचनिको घृताभ्यङ्गादिनियमवन्नियुक्ताभिगमनाङ्गमिति न देवरस्य भार्य्यात्वमापादयत्यतस्तदुत्पन्नमपत्यं क्षेत्रस्वामिन एव भवति न देवरस्य संविदा तूभयोरपि" अनेन सन्दर्भेण प्रमीतपतिकायां नियोगनिषेधात् सधवायामनिषेधः तेन पाण्डुराजेन कुन्त्यां माद्र्यां च नियोगद्वारा पुत्राणामुत्पादनं न विरुद्धम् ।

वस्तुतः "अनेकधा कृताः पुत्रा ऋषिभिर्यैः पुरातनैः न शक्यन्तेऽधुना कर्त्तुं शक्तिहीनैरिदन्तनैः" इति बृहस्-

तिना शक्तिहीनानामेवेदानीन्तनानां तथाचरणस्य निषेधात् शक्तिशालिभिरृषिभिस्तस्याचरणं न निषिद्धं तेषां तपःप्रभावात् तत्पापक्षयसम्भवात्। अतएव मृतपतिकयोरपि अम्बिकाम्बालिकयोर्विचित्रवीर्यभार्य्ययोर्नियोगात् व्यासेन धृतराष्ट्रपाण्डुरूपक्षेत्रजयोरुत्पादनं न विरुद्धम्। अतएवादित्यपुराणे कलिवर्ज्यप्रकरणे "देवरेण सुतोत्पत्तिर्दत्तकन्या प्रदीयते" इत्युक्तं कालिकापुराणे च तत्प्रकरणे "दत्तौरसेतरेषां च पुत्रत्वेन परिग्रहः" इत्युक्तम्। धृतराष्ट्रादीनां तु कलियुगोत्पन्नत्वेऽपि वासुदेवस्य भूमावस्थितिपर्य्यन्तं कलिधर्म्माणां प्रादुर्भावाभावान्न विरोधः। अतः कलौ तस्य सर्व्वथा निषेधात् तद्विषये विशेषो नाभिहितः। २क्षेत्रजातमात्रे त्रि० ३श्वेतकण्टकार्य्यां ४शशाण्डुल्यां ५गोमूत्रिकायां ६शिल्पिकायां ७चविकायाञ्च स्त्री राजनि०

**क्षेत्रज्ञ** पु० क्षेत्रमात्मत्वेन सर्व्वज्ञत्वेन वा जानाति ज्ञा—क। १आत्मत्वेन देहाद्यभिमानिनि जीवे २सर्व्वज्ञे परमेश्वरे। "इदं शरीरं कौन्तेय! क्षेत्रमित्यभिधीयते। एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः। क्षेत्रज्ञञ्चापि मां विद्धि सर्वक्षेत्रेषु भारत!। क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम! तत् क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत्। स च यो यत्प्रभावश्च तत् समासेन मे शृणु। ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक्। ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः। महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च। इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः। इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः। एतत् क्षेत्रं समासेन सविकारमुदाहृतम्" गीता। "अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च" विष्णुस० ३साक्षिणि च। "प्रकृत्यास्तु विकाराये क्षेत्रज्ञस्तैरधिष्ठितः" नचैनं ते प्रजानान्ति स तु जानाति तानि वै" भा०शा०२४३अ०। "यश्चात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते" इति मनूक्ते ४अन्तर्यामिणि "हृदि स्थितः कर्म्मसाक्षी क्षेत्रज्ञो यस्य तुष्यति" भा० आ० ३०१६ श्लो०। ५वटुकभैरवे "क्षेत्रज्ञः क्षत्रियोविराट्" वटुकस्तवः। ६विदग्धे त्रि० मेदि० ७कृषके त्रि० शब्दरत्ना० ८क्षेत्रज्ञातरि त्रि० "तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्य्युपरि सञ्चरन्तो न विन्देयुः" छा०उ०। ततः ब्राह्मणा० भावे ष्यञ् क्षेत्रज्ञ्य युवा० अण्। क्षैत्रज्ञ तद्भावे न०।

**क्षेत्रदूती** स्त्री क्षेत्रे दूतीव। श्वेतकण्टकारिकायाम् राजनि०।

**क्षेत्रपति** पु० ६त०। क्षेत्रस्वामिनि "जीवं क्षेत्रपतिं प्राहुः केचिद्ब्रह्मयथापरे। स्वतन्त्र एव स कश्चित् क्षेत्रस्य पतिरिष्यते" तन्त्र० क्षेत्रपतेरपत्यादि पत्युत्तरपदत्वेऽपि अश्वपत्यादौ पाठात् अण्। क्षैत्रपत तदपत्यादिषु त्रि०।

**क्षेत्रपर्पटी** स्त्री क्षेत्रे पर्पटीव। (क्षेतपापड़ा) इति ख्याते क्षुपभेदे वैद्यकम्।

**क्षेत्रपाल** त्रि० क्षेत्रं पालयति पालि—अण्। १क्षेत्ररक्षके त्रि०। २भैरवभेदे पु०। तद्भेदाः प्रयोगसारे उक्ता यथा "भेदा एकोनपञ्चाशत् क्षेत्रपालस्य कीर्त्तिताः। मातृकाबीजभेदेन सम्भिन्ना नामभेदतः। अजरश्चापकुम्भश्च इन्द्रमूर्त्तस्ततःपरः। ईड़ाचारश्चोक्थसंज्ञ ऊष्माद ऋषिसूदनः। ऋ मुक्तो लुप्तकेशश्च लुप्तकश्चैकदंष्ट्रकः। ऐरावतश्चौषबन्धुरौषधेशस्तथैव च। अञ्जनश्चास्त्रवारश्च कवलः खरुखानलः। गोमुख्यश्चैव घण्टादोङमनाश्चण्डवारणः। छटाटोपो जटालाख्यो भङ्कारश्च ञदुश्वरः। टङ्कपाणिस्तथाचान्यष्ठानबन्धुश्च डामरः। ढक्कारवो णवर्णश्च तडिद्देह स्थिरस्तथा। दन्तुरो धनदश्चान्यो नतिकान्तः प्रचण्डकः। फट्कारो वीरसंघश्च भृङ्गाख्यो मेघभासुरः। युगान्तो रौद्ररूपश्च लम्बोष्ठो वसुमांस्तथा। शूकनन्दः षडाबाख्यः सुनामा हस्वुकस्तथा। एते भेदाः समाख्याता मातृकाक्षरयोनिकाः"। क्षेत्रपालकथनप्रयोजनं यथा "नाम पद्यस्य बर्णानां यो वर्णो मातृकान्तरे। दृश्यते प्रथमं तत्र तत्रायं क्षेत्रपालकः। तत्र तत्र विशिष्टात्मा भेदैरेतैर्व्यवस्थितः। ततो विशिष्टो यष्टव्यः क्षेत्रपालस्तु सर्वतः। क्षेत्रपालमसंपूज्य यः कर्म कुरुते क्वचित्। तस्य कर्मफलं हन्ति क्षेत्रपालो न संशयः"। तन्त्रोक्ते २पश्चिमद्वारपाले भैरवभेदे च "गणेशं वटुकं चैव क्षेत्रपालञ्च योगिनीः। पूर्वादिक्रमयोगेन द्वारपालान् प्रपूजयेत्" तन्त्र० ३क्षेत्रपालके त्रि०

**क्षेत्रफल** न० क्षेत्रस्य फलम्। १भूम्यादिक्षेत्रजाते शस्यादौ। लीलावत्याद्युक्ते त्रिकोणादिक्षेत्रभवे २हस्तादिरूपे (कालि) फले क्षेत्रशब्दे विवृतिः। [यवायां वैद्यकम्।

**क्षेत्रमालिका** स्त्री क्षेत्रं मालयति मल—णिच्—ण्वुल्।

**क्षेत्ररुहा** स्त्री क्षेत्रे रोहति रुह—क। १वालुक्यां कर्कटीभेदे राजनि०। २क्षेत्रजातमात्रे त्रि०। [तत्त्वज्ञापके व्यवहारभेदे।

**क्षेत्रव्यवहार** पु० लीलावतीप्रदर्शिते त्रिकोणादिक्षेत्रफलादि-

**क्षेत्रसम्भव** त्रि० क्षेत्रे सम्भवति सम्+भू—अच्। १क्षेत्रजाते "क्षेत्रसम्भवफलं घनं भवेत्" लीला०। २भूमिजातमात्रे त्रि०। ३भिण्डाक्षुपे पु० राजनि०।

**क्षेत्रसम्भूत** पु० क्षेत्रे संभूतः। १कुन्दुरे पु० शब्दचि० २भूमिभवे त्रि०।

**क्षेत्रसाधस्** त्रि० क्षेत्रं साधयति साधि–असुन्। क्षेत्रसाधके "सपर्यन्न पुरुप्रियं मित्रं न क्षेत्रसाधसम्" ऋ०८,३१,१४।

**क्षेत्राजीव** त्रि० क्षेत्रं तत्फलं यस्य आजीवति आ–जीव–अण्। कर्षके अमरः।

**क्षेत्राधिदेवता** स्त्री ६त०। सिद्धस्थानतीर्थाधिष्ठातृदेवताभेदे। तन्नामोच्चारणञ्च श्रीशब्दोच्चारणपूर्वं कार्य्य यथाह सं०त० प्रयोगसारः "देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम्। सिद्धं सिद्धाधिकारांश्च श्रीपूर्वं समुदीरयेत्"।

**क्षेत्राधिप** स्त्री ६त०। १मेषादिद्वादशराशिस्वामिषु कुजादिषु क्षेत्रशब्दे विवृतिः। २क्षेत्रस्वामिनि त्रि०। [शब्दमा०।

**क्षेत्रामलकी** स्त्री क्षेत्रे जाता आमलकी। भूम्यामलक्याम्

**क्षेत्रिक** त्रि० क्षेत्रमस्त्यस्य ठन्। क्षेत्रस्वामिनि। "ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति। क्षेत्रिकस्यैव तद्बीजम्" मनुः। इनि क्षेत्रिन् अप्यत्र क्षेत्रशब्दे उदा०। "यावच्छस्यं विनश्येत्तु क्षेत्री तस्य फलं लभेत्" याज्ञ०।

**क्षेत्रिय** त्रि० परक्षेत्रे देहान्तरे चिकित्स्यः परक्षेत्रस्य क्षेत्रियजादेशः। देहान्तरे चिकित्स्ये अप्रतीकार्य्ये १रोगे "दण्डोऽयं क्षेत्रियो येन मय्यपातीति साऽब्रवीत्" भट्टिः। क्षेत्रमस्त्यस्य वा० घ। २क्षेत्रस्वामिनि त्रि०। "क्षेत्रियस्यात्यये दण्डो भागाद्दशगुणोभवेत्। ततोऽर्द्धदण्डोभृत्यानामज्ञानात् क्षेत्रियस्य तु" मनुः क्षेत्रियस्येत्यत्र क्षेत्रिकस्येति पाठान्तरम्। क्षेत्रे भवः वा० घ। ४क्षेत्रजाते तृणादौ त्रि० क्षेत्रे स्वपरक्षेत्रमात्रे प्रसितः वा०घः। ५परदाररते पु० मेदि०।

**क्षेत्रेक्षु** पु० क्षेत्रे इक्षुरिव। यावनाले(जुङ्गारी)ख्याते राजनि०

**क्षेप** पु० क्षिप–घञ्। १निन्दायां, २विक्षेपे, ३प्रेरणे, ४लेपने ५हेलायां ६लङ्घने हेम०। करणे घञ्। ६गर्वे मेदि० ७विलम्बे हेम०। कर्मणि घञ्। ८गुच्छे त्रिका०। तत्र निन्दायां "सत्यासत्यान्यतं स्तोत्रे न्यूनाङ्गेन्द्रियरोगिणाम्। क्षेपं करोति चेद्दण्ड्यः" याज्ञ०। "क्षेपसंप्राप्तवांस्तत्र प्रकृत्या कोपनः प्रभुः" भा०शा० ४६अ०। "क्षेपयुक्तैर्वचोभिः" भा०आ० ५५५ श्लो०। विक्षेपे दृष्टिक्षेपः अपटीक्षेपः। विलम्बे "कृतक्षणक्षेपमुदैक्षताच्युतम्" माघः। कर्मणि घञ्। क्षिप्यमाणे काष्ठकशब्दे पृ० ०७१ उदा० फलान्यधोधस्तदधो निवेश्य:" लीला० क्षेप+स्वार्थे कात्तत्रार्थे "भाज्योहारः क्षेपकश्चापवर्त्त्य" इत्यादि तत्र शब्दे लीलावतीवाक्यमुक्तम्।

**क्षेपक** त्रि० क्षिप–ण्वुल्। १निक्षेपकर्त्तरि ग्रन्थकृदकृतांशस्य तद्ग्रन्थमध्ये सन्निवेशके च। क्षेप+स्वार्थे क। क्षिप्यमाणे यथा लीलावत्यां "पादोनपद्यावत्तुल्यटङ्कैरित्यादि" श्लोकद्वयम्।

**क्षेपण** न० क्षिप–ल्युट्। १अपवादे २लङ्घने ३मारणे ४विक्षेपे ५यापने च। "आयुषः क्षेपणार्थञ्च तु दातव्यं स्त्रीधनं विना" हरीतः "उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षेपणं स्मृतम्" मनुः। करणे ल्युट्। ६क्षेपसाधने मल्लव्यापारभेदे (फेलान) "क्षेपणैरष्टिभिश्चैवावरोहोद्धूतनिःस्वनैः" भा०वि०१३अ० "क्षेपणं कथ्यते यत्तु स्थानात् प्रच्यावनं हठात्" तद्व्याख्यायां नीलकण्ठधृतं मल्लशास्त्रम्।

**क्षेपणि(णी)** स्त्री क्षिप बा० अनि वा ङीप्। १नौकादण्डे (दांड़) अमरः। २जालभेदे (क्षेपलाजाल) मेदिनि:।

**क्षेपणीय** पु० क्षिप–अनीयर्। "क्षेपणीयोभिन्दिपालः खड्गो-दीर्घमहाफलः" यादवोक्तलक्षणे १भिन्दिपालेऽस्त्रे, २क्षेप्यमात्रे पाषाणादिके त्रि०। "नाराचक्षेपणीयाश्मनिष्पेषपतितानलम्" रघुः। [शीघ्रतायाम्।

**क्षेपिमन्** पु० क्षिप्रस्य भावः पृथ्वा० इमनिच्" क्षेपादेशः।

**क्षेपिष्ठ** त्रि० अतिशयेन क्षिप्रः इष्ठन् क्षेपादेशः। अतिशयशीघ्रे "वायुर्वै क्षेपिष्ठा देवता" श्रुतिः। ईयसुन्। क्षेपीयस् तत्रार्थे त्रि० स्त्रियां ङीप्।

**क्षेम** पु० क्षि–मन्। १चोरनामगन्धद्रव्ये। २लब्धवस्तुनोरक्षणे पु० न० अर्द्धर्चादि० मेदिनिः। "उपेयादीश्वरञ्चैव योगक्षेमार्थसिद्धये" याज्ञ० लब्धस्य रक्षणं क्षेमः" व्या०त० रघु०। "यन्ता च मे धर्त्ता च मे क्षेमश्च मे" यजु०१८,७०, क्षेमः विद्यमानधनादे रक्षणशक्तिः" वेददी०। ३विद्यमानसत्ताकस्य वस्तुनः स्वाधिकरणे विशिष्टबुद्धिनियामकसम्बन्धविशेषव्यवस्थापने क्षैमिकशब्दे विवृतिः। ४कुशले न० ५तद्वति त्रि० अम०। "गृहाण राज्यं विपुलं क्षेमं निहतकण्टकम्" भा० व० २५९७६ श्लो० "शनैःक्षेमः पुनः पन्थाः" भा० व० ४४४श्लो० "श्वश्रूश्वशुरभर्त्तॄणां मम क्षेमास्तु शर्वरी" २९८अ०। ६मुक्तौ न०हेम० "भविता सहदेवस्य" इत्युपक्रमे "अथ मागधराजानो भाविनोये वदामि ते" "ततः शुतञ्जयाद्विप्र! शुचिस्तस्य भविष्यति। क्षेमोऽथ सुव्रतस्तस्माद्धर्मस्तत्र समन्ततः" भा०या०९.२२,३०अ०उक्ते सहदेववंश्ये ७नृपभेदे पु०। "जन्मसम्पद्विपत्क्षेमं प्रत्यरिः साधकोवधः। मित्रं परममित्रं च" ज्यो० उक्ते स्वजन्मताराबधिके चतुर्थनवमत्रयोदशताराविशेषे नक्षत्रे च न०।

**क्षेमक** पु० क्षेम–स्वार्थे क। १चोरनामगन्धद्रव्ये जटा० २राक्षसभेदे, "एतस्मिन्नेव काले तु पुरीं वाराणसीं नृप! शून्यां निवेशयामास क्षेमको नाम राक्षसः" हरि०२९अ० ३पाण्डुवंश्ये नृपभेदे। "दण्डपाणिर्निमिस्तस्य क्षेमको भविता ततः" इत्युपक्रमे "क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ" भा० ९,२२,२९श्लो०।

**क्षेमकर** त्रि० क्षेमं करोति कृ–अच् ६त०। १मङ्गलकारके "पन्थानं वः प्रवक्ष्यामि शिवं क्षेमकरं द्विजाः!" भा० आश्व० २५ अ०।

**क्षेमकार** त्रि० क्षेमं करोति कृ–अण् उप०स०। मङ्गलकारके "पितुः प्रियङ्करो भर्त्ता क्षेमकारस्तपस्विनाम्" भट्टिः

**क्षेमकृत्** त्रि० क्षेमं करोति कृ–क्विप् ६त०। १कृतमङ्गले २उपात्तस्य रक्षके परमेश्वरे पु०। "अनियन्ता निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः" विष्णुस०।

**क्षेमङ्कर** त्रि० क्षेमं करोति "क्षेमप्रियमद्रेऽण् च" पा० चकारात् खच् मुम् च। क्षेमकारके।

**क्षेमङ्करी** स्त्री "क्षेमान् देवेषु सा देवी कृत्वा दैत्यपतेः क्षयम्। क्षेमङ्करी शिवेनोक्ता पूज्या लोके भविष्यसि" देवीपु० ४० अ०उक्ते १देवीभेदे, २शङ्खचिल्लपक्षे। "कुङ्कुमारुणसर्वाङ्गि! कुन्देन्दुधवलानने। मत्स्यमांसप्रिये! देवि! क्षेमङ्करि! नमोऽस्तु ते" इति तत्प्रणाममन्त्रः

**क्षेमदर्शिन्** त्रि० क्षेमं पश्यति दृश–णिनि। मङ्गलदर्शिनि स्त्रियां ङीप्। कोसलाधिपराजभेदे।"कोसलानामाधिपत्यं संप्राप्तं क्षेमदर्शिनम्" "स कार्कं पञ्जरे बद्ध्वा विषयं क्षेमदर्शिनः" भा० शा० ८२ अ०।

**क्षेमधन्वन्** पु०रामवंश्ये राजभेदे। "रामस्य तनयो जज्ञे कुश इत्यभिविश्रुतः" इत्युपक्रमे "नभस्य पुण्डरीकस्तु क्षेमधन्वा ततः स्मृतः" हरि० १५ अ०। "स क्षेमधन्वानममोघधन्वी" रघुः।

**क्षेमधूर्त्त** पु० ब०व० वृह० सं० कूर्मविभागे "मध्यमाकाः क्षेमधूर्त्ताश्च" इति उत्तरस्यामुक्ते देशभेदे।

**क्षेमधूर्त्ति** पु० कैकेयदेशाधिपे राजभेदे। "दृढ़कृत्क्षेममयायन्तं कैकेयं दृढ़विक्रमम्। क्षेमधूर्त्तिं महाराज! विद्याधीरोऽसि भार्गवः" भा० द्रो०१० ७अ०। "गणः क्रोधवशो नाम यस्ते राजन्! प्रकीर्त्तितः। ततः सञ्जज्ञिरे वीराः" इत्युपक्रमे "कारूषक्षेमस्य राजानः क्षेमधूर्त्तिस्तथैव च" भा०आ०६७अ०। [क्षेमाफलेति पाठे प्रयो०।

**क्षेमफला** स्त्री० क्षेमं फलं यस्य। उडुम्बरवृक्षे शब्दच०।

**क्षेममूर्त्ति** स्त्री दुर्योधनभ्रातृभेदे "उग्रश्रवाः उग्रसेनः क्षेममूर्त्तिस्तथैव च" भा० आ० ६७ अ०।

**क्षेमवृद्धिन्** त्रि० क्षेमस्य वृद्धमस्त्यस्य इनि'। क्षेमवृद्धिनये ततः बाह्वा० इञ्। क्षैमवृद्धि तदपत्ये पु० स्त्री०।

**क्षेमा** स्त्री १देवीमूर्त्तिभेदे "निम्ने से प्रजयेत् क्षेमां सर्वकामफलप्रदाम्" देवी०पु०४७अ०। २अप्सरोभेदे च "अम्बिका लक्षणा क्षेमा देवी रम्भा मनोरमा" भा० आ०१२३अ०।

**क्षेमाधि** पु० मिथिलाधिपे राजभेदे। "अरिष्टनेमिस्तस्यापि श्रुतायुस्तत् सुपार्श्वकः। ततश्चित्ररथोयस्य क्षेमाधिर्मिथिलाधिपः" भाग०९,१३,१४।

**क्षेमासन** न० "अथ क्षेमासनं वक्ष्ये यत् कृत्वा प्रेमवेदिवम्। दक्षहस्ते दक्षपादं केवलं स्थापयेत् सुधीः" इति रुद्रयामलोक्ते आसनभेदे।

**क्षेम्य** त्रि० क्षेमाय साधु यत्। कुशलयोग्ये "वायं मनुष्याय पशवश्च क्षेम्या भवन्ति" श्रुतिः।

**क्षेय** त्रि० क्षेतुं योग्यः क्षि–यत्। क्षेतुं योग्ये।

**क्षेव** सेवने भ्वा०पर०सक० सेट्। क्षेवति अक्षेवीत् चिक्षेव।

**क्षै** क्षये भ्वा० पर०अक० अनिट्। क्षायति अक्षासीत् चक्षौ। क्षेय क्षाता क्षामः।

**क्षैत** त्रि० क्षितेरयम् अण्। १क्षितिसम्बन्धिनि २क्षीणतासम्बन्धिनि च "यशस्तरोयशसां क्षैतो अस्मे" ऋ०९,९७,३,

**क्षैतयत** पु० क्षैताय क्षीणतायै यतते यत–अच्। क्षीणतायै यतमाने ऋषिभेदे तस्यापत्यादि तिका० फिञ्। क्षैतयतायनि तदपत्यादौ

**क्षैत्र** न०क्षेत्राणां समूहः भिक्षा० अण्। १क्षेत्रसमूहे। स्वार्थे अण्। २क्षेत्रे च "वैश्वानरं क्षैत्रासत्याय देवाः" यजु० ३३,६०। क्षेत्रमेव क्षैत्रं तस्य जितं जयस्तस्मै यजमानस्य क्षैत्रजित्ये" वेददी०

**क्षैमिक** त्रि० क्षेमेण निर्वृत्तं ठञ्। १लब्धस्य रक्षणोपयोगिनि २विद्यमानसत्ताकस्य वस्तुनः स्वाधिकरणे स्वविशिष्टबुद्धिनियामकसम्बन्धव्यवस्थापननिर्वाहो जन्यत्वं च। यथा दुःखात्यन्ताभावस्य मोक्षत्ववादिमते अत्यन्ताभावस्याजन्यत्वेऽपि स्वप्रतियोगिदुःखानुत्पादनद्वारा स्वाधिकरणे स्वविशिष्टबुद्धिनियामकदुःखाकालीनस्वरूपसम्बन्धनिर्वाहकत्वं तत्त्वज्ञानस्येति दुःखात्यन्ताभावस्य क्षैमिकी तत्त्वज्ञानसाध्यता। एवं कृतसाध्यत्वमिथ्यात्वमते "एकादश्यामुपवसेत्" इत्यादौ अहोरात्रभोजनाभावस्य क्षैमिकं कृतसाध्यत्वम्। "भावोयथाऽ-

भावः कार्य्यवत् कारणं मतः” इत्युदयनाचार्य्यैरभावमात्रस्य दृष्टान्तविषया कार्य्यत्वोक्तिः क्षैमिकविषया। एतेन प्रायश्चित्तविवेकटीकायां श्रीकृष्णतर्कालङ्कारेणात्यन्ताभावस्य क्षैमिकजन्यत्वस्य निराकरणम् निरस्तम् प्रतियोग्यकालीनस्वरूपसम्बन्धविशेषस्यैवात्यन्ताभावविशिष्टबोधनियामकत्वेन तादृशसम्बन्धस्य तत्त्वज्ञानकृतादिनिर्वाह्यत्वात् स्वाधिकरणे सति हि दुःखे भोजने वा तादृशस्वरूपसम्बन्धाभावात् विशिष्टबुद्धेरनुदयात् तस्य तत्त्वज्ञानादिप्रयोज्यत्वमेवमन्यत्रोह्यम्

**क्षीरह्रद** त्रि० क्षीरह्रदस्येदम् शिवा० अण्। क्षीरह्रदसम्बन्धिनि।

**क्षैरेय** त्रि० क्षीरे संस्कृतम् ढञ्। १क्षीरे संस्कृते परमान्ने न० हेम०। २यवाग्वां स्त्री ङीप्।

**क्षोड़** पु० खोड़-घञ् पृषो०। १आलाने गजबन्धन्याम् शब्दचि०

**क्षोण** त्रि० क्षि-बा० डोन। क्षयशीले। “महः क्षोणस्याश्विना कण्वाय” ऋ०१,११७,८ क्षोणस्य क्षयणस्य निरु० ६,६,

**क्षोणि(णी)** स्त्री क्षै-बा० डोनि वा ङीप। १पृथिव्यां निघ०। “मत्स्यो युगान्तसमये मनुनोपलब्धः क्षोणीमयो निखिलजीवनिकायकेतः” भाग०२,७,१२। २एकसंख्यायाञ्च

**क्षोद** पु० क्षुद-घञ्। १चूर्णने पेषणे अमरः कर्म्मणि घञ्। २रजसि च हेम०। “आनेभिमग्नैः शितिकण्ठपक्षक्षोदद्युतश्चुभिरे रथौघैः” माघः “पथः खण्डनखण्डखाद्यसहजक्षोदक्षमे” नैष०।

**क्षोदक्षम** त्रि० क्षोदं क्षमते क्षम-अच्। विचारसहे “पथः खण्डनखाद्यसहजक्षोदक्षमे” नैष०।

**क्षोदस्** न० क्षुद-असुन्। जले निघ०।

**क्षोदित** न० क्षुद-णिच्-क्त। १चूर्णिते पेषिते शब्दचि०।

**क्षोदिमन्** पु० क्षुद्रस्य भावः इमनिच् क्षोदादेशः। क्षुद्रतायाम्।

**क्षोदिष्ठ** त्रि० अतिशयेन क्षुद्रः इष्ठन् क्षोदादेशः। अतिक्षुद्रे।

**क्षोदीयस्** त्रि० अतिशयेन क्षुद्र ईयसुन् क्षोदादेशः। क्षुद्रतरे “बृहत्सहायः कार्य्यान्तं क्षोदीयानपि गच्छति” माघः स्त्रियां ङीप्। [प्रजास्च भवन्ति” शत०ब्रा० १,५,२,७।

**क्षोधुक** त्रि० क्षुध- बा० उकञ्। क्षुधायुक्ते। “क्षोधुका ह्यस्य

**क्षोभ** पु० क्षुभ-घञ्। १सञ्चलने “स नूपुरक्षोभपदाभिरासीत्” “रथक्षोभपरिश्रान्तः” रघुः। २विकारे च “क्षोभमाशु हृदयं न यदूनाम्” माघः। “अर्थेन्द्रियक्षोभमयुग्मनेत्रः” कुमा०।

**क्षोभक** पु० “दुर्जराख्यस्य पूर्वस्यां पुरं नाम वरासनम्। तद्दक्षिणे महाशैलः क्षोभको नाम नामतः” कालिकापु० ७अ० उक्ते कामाख्यतीर्थस्थनगरभेदे। क्षुभ-ण्वुल्। २क्षोभकारके त्रि०।

**क्षोभण** त्रि० क्षुभ-णिच्-ल्यु। १क्षोभजनके। २कामबाणविशेषे पु० पञ्चबाणशब्दे विवृतिः ३शिवे पु०। “नमो वृद्धाय लुब्धाय क्षुब्धाय क्षोभणाय च” भा० शा० २८६अ० शिवसहस्रनाम। ४विष्णौ। “उद्भवः क्षोभणो देवः श्रुतगर्भोरमेश्वरः” विष्णुसं० तस्य च सृष्टिकाले प्रकृत्यादिक्षोभकत्वात्तथात्वम् यथाह विष्णुपु० “प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया प्रभुः। क्षोभयामास भगवान् सर्गकालेऽव्ययाव्ययौ”। भावे ल्युट्। ५क्षोभणे न०।

**क्षोम** न० क्षु-मन्। १मण्डपोपरिशालायाम् (चिलेवर) शब्दचि०। २अट्टे भरतः ३गणहासके पु० जटाधरः संज्ञायां कन्। तत्रार्थे ४चोरनामगन्धद्रव्ये पु० शब्दचि०।

**क्षौ(णि)णी** स्त्री क्षु-बा० नि वृद्धिश्च वा ङीप्। १धरण्याम् अमरः। अन्या व्युत्पत्तिः ब्रह्मवै०पु०२०७अ०उक्ता यथा “इज्या च यागधाराच्च क्षौणी क्षीणा लये च या। महालये चयं यान्ति क्षितिस्तेन प्रकीर्त्तिता” तेन क्षीणाशब्दात् पृषो० साधु। २एकसंख्यायाञ्च।

**क्षौणीप्राचीर** पु० क्षौणी प्राचीर इव यस्य। समुद्रे जटा०।

**क्षौणीभुज्** पु० क्षौणीं भुनक्ति अवति भुज-क्विप्। क्षितिपालके राजनि

**क्षौद्र** न० क्षुद्राभिः सरघाभिर्निर्वृत्तम् अण्। “मक्षिकाः कपिलाः सूक्ष्माः क्षुद्राख्यास्तत्कृतं मधु। मुनिभिः क्षौद्रमित्युक्तं तद्वर्णात् कपिलं भवेत्” इति भावप्र०उक्ते १मधुनि अमरः। “सक्षौद्रपटलैरिव” रघुः। “गुणैर्माक्षिकवत् क्षौद्रं विशेषान्मेहनं परम्” भावप्र०। २जले मेदि०। ३चम्पकवृक्षे पु० शब्दच०। ४क्षितिकणे पांशौ न० शब्दचि० ५मागध्यां जाते जातिसङ्करभेदे पु०स्त्री० “चतुरो मागधी सूते क्रूरान् मायोपजीविनः। मांसस्वादुकरं क्षौद्रं सौगन्ध्यमिति विश्रुतम्” भा० अनु० ४८अ०। क्षुद्रस्य भावः अण्। ६क्षुद्रतायां न०।

**क्षौद्रक्य** न० क्षुद्रकः आयुधजीविसंघः स्वार्थे ञ्यट्। आयुधजीविसंघे छिच्चसामर्थ्यात् स्त्रियां ङीप् क्षौद्रकीत्यप्यत्र स्त्री सि०कौ०।

**क्षौद्रज** न० क्षौद्रात् जायते जन ड। (मोम) ख्याते १सिक्थके राजनि०। २मधुजातमात्रे त्रि०।

**क्षौद्रधातु** पु० कर्म०। माक्षिके उपधातुभेदे वैद्यकम्।

**क्षौद्रप्रिय** पु० क्षौद्रमिव प्रियः स्वादुत्वात्। १जलमधूकद्रुमे हेम०। २मधुप्रिये त्रि०।

**क्षौद्रमेह** पु० क्षौद्रमिव मेहः। मधुमेहे इत्तु मेहशब्दे ६१०पृ० सुश्रुतवाक्ये तल्लक्षणं दृश्यम् "कषायं मधुरं रूक्षं क्षौद्रमेहं वदेत्बुधः" भावप्र०।

**क्षौद्रेय** न० क्षौद्रे भवः ढञ्। (मोम) सिक्थके राजनि०।

**क्षौम** न० क्षु–मन् प्रज्ञा० स्वार्थे अण्। १दुकूले पट्टवस्त्रे। "स्त्रियः पद्मनिषण्णायाः क्षौमान्तरितमेखले" रघुः "क्षौममाकुलतया विचकर्ष" माघः "वल्कलाजिनपूर्व्येण शाणक्षौमाविकानि च" मनुः। क्षुमाया अतस्या विकारः अण्। २शणभेदजातवस्त्रे स्त्रियां ङीप् क्षौमी कन्था। क्षौमेण दुकूलेन परिवृतो रथः अण्। ३दुकूलपरिवृते रथे पु०। ४हर्म्यभेदे पु०न० कौटिल्य:। अट्टे अमरः। अट्टश्च प्राकाराग्रस्थितबलगृहमिति केचित्। मण्डपोपरिनिर्म्मित गृहम् (चिलेवर) इत्यन्ये। [शब्दचि०।

**क्षौमिक** पु० क्षौममिव कायति कै–क। चोरनामगन्धद्रव्ये।

**क्षौमी** स्त्री क्षुमैव स्वार्थे प्रज्ञा० अण् ङीप्। १अतस्यां (मसिना)ख्याते वृक्षे। क्षुमाया विकारः कन्था अण् ङीप्। २क्षुमाजातशणकृतकन्थायां स्त्री।

**क्षौर** न० क्षुरेण निर्वृत्तम् अण्। १क्षुरकर्म्मणि केशकर्त्तने। तत्र विहितनक्षत्रादि क्षुरकर्म्मशब्दे २३८६ पृ० उक्तप्रायं विशेषोऽत्र कश्चिदभिधीयते
"व्रतानामुपवासानां श्राद्धादीनाञ्च संयमे। न करोति क्षौरकर्म अशुचिः सर्वकर्मसु। स च तिष्ठति कुण्डेषु नखादीनाञ्च सुन्दरि!। तदेव दिनमानाब्दं तद्भोजी दण्डताड़ितः" ब्रह्म वै० पु०२७अ०। "चन्द्रशुद्धिर्यदा नास्ति तारायाश्च विशेषतः। अक्षौरभेऽपि कर्त्तव्यं चन्द्रचन्द्रजयोर्द्दिने" ज्यो०त०। "मानं क्षौरे हन्ति गुरुः शुक्रं शुक्रो-धनं रविः। आयुरङ्गारको हन्ति सर्वं हन्ति शनैश्चरः" श्रीपतिरत्नमाला। "आज्ञया नरपतेर्द्विजन्मनां दारकर्म मृत सूतकेषु च। बन्धमोक्षमखदीक्षणेष्वपि क्षौरमिष्टमखिलेषु चोडुषु" भोजदे०। "ऋवकार्ये पितृश्राद्धे रवेरंशपरिच्चये। क्षुरिकर्म न कुर्वीत जन्ममासे च जन्मभे" वृद्धगार्ग्यः, "कृशशमानर्त्तपुरं पाटलिपुत्त्रं पुरीमहिच्छत्राम्। दितिमदितिञ्च स्मरतां क्षौरविधौ भवति कल्याणम्" ज्यो० त०। अत्र क्रमो वराहपु० "श्मश्रुकर्म कारयित्वा नखच्छेदमनन्तरम्" ज्योति० त०। "केशश्मश्रुलोमनखानि वापयीत शिखावर्ज्जम्" शु० त० गोभिलः। "रोहिण्याञ्च विशाखायां मैत्रे चैवोत्तरासु च। मघायां कृत्तिकायाञ्च द्विजैः क्षौरं विवर्ज्जितम्। कृत्वा तु मैथुनं क्षौरं यो देवांस्तर्पयेत् पितॄन्। रुधिरं तद्भवेत्तोयं दाता च नरकं व्रजेत्" ब्रह्म० वै० पु० नापितगृहे क्षौरनिषेधो यथा "स्वयं माल्यं स्वयं पुष्पं स्वयं घृष्टञ्च चन्दनम्। नापितस्य गृहे क्षौरं शक्रादपि हरेत् श्रियम्" कर्म्मलोचनः।

**क्षौरपव्य** न० क्षुरं पविरिव स्वार्थे ष्यञ्। अतितीक्ष्णे "कचिद्धंसं चिलकथं क्षौरपव्यं स्वयं भ्रमिम्" भाग० ६, ५,८।

**क्षौरिक** पु० क्षौरं शिल्पत्वेनास्त्यस्य ठन्। नापिते शब्दमा०

**क्ष्णु** तेजने अदा० पर० सक० सेट्। क्ष्णौति अक्ष्णावीत्। चुक्ष्णाव। क्ष्णविता क्ष्णुनः। "वाचं क्ष्णुवानोदमयन् सपत्नान्" अथ०५।२०।१। "उभयतो क्ष्णोदं वाचः क्ष्णुतम्" शत० ब्रा० ६,३,१,२४।

**क्ष्णुत** त्रि० क्ष्णु–क्त। तीक्ष्णीकृते अमरः।

**क्ष्णोत्र** न० क्ष्णु–करणे त्रल्। अस्त्रतेजने शाणाख्ये यन्त्रभेदे। "क्ष्णोत्रेणेव स्वधितिर्मांसशीतम्" ऋ० २,३७,७।

**क्ष्मा** स्त्री क्षमते भारं क्षम–अच् उपधालोपश्च। १धरायाम्। अमरः "क्ष्मां लम्भयित्वा क्षमयोपपन्नम्" रघुः। "नचोदक प्रवेशेन न च क्ष्माशयनादपि" भा० व० १९९ अ०। "क्ष्मया चरति परि सा वृणक्तु नः" निरु० धृता ऋक् २एकसंख्यायाञ्च।

**क्ष्माज** पु० क्ष्मायां जायते जन–ड। १मङ्गलग्रहे २नरकासुरे च

**क्ष्मापति** पु० ६त०। भूपे क्ष्मानाथादयोऽप्यत्र।

**क्ष्माभुज्** पु० क्ष्मां भुनक्ति अवति भुज–क्विप्। भूमिपाले

**क्ष्माभृत्** पु० क्ष्मां बिभर्त्ति पालयति धारयति वा भृ–क्विप् तुक् च। १राजनि २पर्वते च तस्य भूमिधरत्वात्तथात्वम्।

**क्ष्माय** विधूनने कम्पने भ्वा० आत्म० अक० सेट्। क्ष्मायते। अक्ष्मायिष्ट चक्ष्माये ईदित् क्ष्मातः। "अक्ष्मायन्त मही गृध्राः" "चक्ष्माये च महीं रामः" भट्टिः। णिचि पुक् यलोपश्च। क्ष्मापयति।

**क्ष्मील** निमेषे भ्वा० पर० अक० सेट्। क्ष्मीलति अक्ष्मीलीत् चिक्ष्मील। निमेषः पक्ष्मभिश्चक्षुषोरावृतिः।

**क्ष्विड** स्नेहे भ्वा० आत्म० अक० मोचने सक० सेट्। क्ष्वेडते लृदित् अक्ष्विडत्। चिक्ष्विडे ञीदित्। क्ष्वेडितम्। आदित् क्ष्विण्णम् क्ष्वेडित तेन "नास्फोटयेन्नचाक्ष्वेडेत्" मनुः। परस्मैपदमार्षम् एवं "क्ष्वेडलोवावमानाश्च

प्रक्ष्वेदुस्ते महाजवाः" रामा० कि० ४५ अ०। "क्ष्वेडन्ति घुघुरायन्ते ज्वलन्तीव च ते भृशाः" सुश्रुतः। अव्यक्तदलशब्दकरणे अक० "क्ष्वेडितोत्कुष्टसङ्कुलः" भा० आश्व० ५९ अ०।

क्ष्विद मोचने सक० स्नेहे अक० भ्वा० आ० सेट्। क्ष्वेदते ऌदित् अक्ष्विदत् ओदित् क्ष्विण्णः आदित् क्ष्विण्णं क्ष्वेदितं तेन।

क्ष्विद कूजने दिवा० पर० अक० सेट्। क्ष्विद्यति। इरित् अक्ष्वेदीत् अक्ष्विदत्। आदित् क्ष्विण्णं क्ष्वेदितं तेन।

क्ष्वेड पु० क्ष्विड–भावादौ घञ्, पचाद्यच् वा। १अव्यक्तदन्तशब्दभेदे २स्नेहे ३मोचने ४त्यागे। ५कर्णामयभेदे कर्णगतरोगशब्दे १७०८ पृ० विवृतिः। ६विषे पु० अम० ७पीतघोषातक्यां रत्नमा० ८लोहितार्कपर्णफले न० मेदि० ९वंशशलाकायां १०सिंहनादे ११कोषातकीवृक्षे स्त्री राजनि०

क्ष्वेडित न० क्ष्विड भावे–क्त। सिंहनादे अमरः।

क्ष्वेल संचालने, गतौ सक० क्रीडायाम् अक० भ्वा० पर० सेट्। क्ष्वेलति अक्ष्वेलीत् ऋदित् णिचि चङि न ह्रस्वः। अचिक्ष्वेलत्। "ये तु विष्टभ्य गात्राणि क्ष्वेलन्ति च हसन्ति च" (वे हरियूथपाः) रामा० ६,२अ० "दध्नुः शङ्खांश्च संहृष्टाः क्ष्वेलन्त्यपि यथापुरम्" ६,२६ अ०। "ते तदा स्फोटयामासुः क्ष्वेलन्तश्च समन्ततः" २७ अ०।

क्ष्वेला स्त्री क्ष्वेल–अ। क्रीडायाम्। स्वार्थे क क्ष्वेलिकाप्यत्र। "क्ष्वेलिकया मृषा समाधिना आमीलितदृशं प्रेमसंरम्भेण चकितचकित आगत्य पृषदपरुषविषाणाग्रेण लुठति" भाग० ५स्क० ८अ०। गौरा० ङीष् क्ष्वेलीत्यप्यत्र। "बाहुप्रसार परिरम्भ करालकोरुनीविस्तनालभननर्मनखाग्रपातैः। क्ष्वेल्यावलोकहसितैर्व्रजसुन्दरीणामुत्तम्भयन् रतिपतिं रमयाञ्चकार" भाग० १० स्क० २९ अ०।

इति श्री तारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचिते वाचस्पत्ये ककारादिशब्दार्थसङ्कलनम्।

